ननु इष्यन्वयमात्रेण निवर्त्तते

न्या॰मी॰ रत्वस्याकांक्षा विकृतेरपि अस्ति कथंभावाकांक्षा सा च तद्दोपशाम्यति यद्दोपकारास्तत्पृष्टभावेन च पदार्था अन्वीयंते न तूपकारमात्रेण येन शा
१२ म्यति अतश्च यथैंद्रियभावनायाः करणाकांक्षाद्धः करणत्वेनान्वये जाते स्मि हूस्य करणत्वानुपपत्त्या होमस्याश्रयत्वेनान्वययावदनुवर्त्तते
आश्रयत्वेन च गृह्यमाणो होमः करणाकांक्षयैव गृह्यत इत्युक्तं न त्वाश्रयाकांक्षा नाम चतुर्थ्यस्ति एवं विकृतेः कथंभावाकांक्षा नोपकारान्व
यमात्रेण निवर्त्तते उपकारपृष्ठभावेन यावत्पदार्थान्वयमनुवर्त्तते अतश्चोपकारपृष्ठभावेन गृह्यमाणाः पदार्थाः कथंभावाकांक्षयैव गृह्यं
ते तत्र प्राकृताः पदार्थाः कथंभावाकांक्षयैव गृह्यमाणा अपि न प्रकरणग्राह्याः प्रकृत्युपकारकृततया तेषां आकांक्षाभावात् औदुंबरत्वादयस्तु
अन्यानुपकारतया साकांक्षाः पशुनियोजनयूपपृष्ठभावेन यावत् खादिरत्वमायाति तावद्विधीयंत इति युक्तं तेषां प्रकरणाद्ग्रहणं उभयाकांक्षा
सत्वात् यदि हि यूपपृष्ठभावेन खादिरत्वं विहितं स्यात् ततो विकृतेराकांक्षाभावादौदुंबरत्वं न प्रकरणग्राह्यं स्यात् न चैतदिष्टं कस्य खादिरत्वा
विषयत्वात् ननु यदि यावत्खादिरत्वमायाति तावदेवौदुंबरत्वं विधीयते तदा तेन खादिरत्वबाधो अप्राप्तबाधः स्यात् तार्त्तीयबाधवत् तथा
हि बाधो द्विविधः अप्राप्तबाधः प्राप्तबाधश्चेति तत्र तार्त्तीयो बाधोऽप्राप्तबाधः तत्र हि यावद्दुर्बलेन प्रमाणेन विनियोगः कर्त्तुमारभ्यते तावदेव प्रब
लप्रमाणेन विनियोगः क्रियत इति तद्बाधिते नेतरबाधोऽप्राप्तबाधः दुर्बलप्रमाणस्याकृतत्वात् प्राकृतस्यांगस्य विकृतौ चोदकप्राप्तस्य प्र
त्याम्नायादर्थलोपात्प्रतिषेधाद्वा यो बाधः स प्राप्तबाधः यथा प्राकृतीनां कुशानां प्रतिकूलशराम्नानात् यथावावघातस्य कृष्णलेषु वैतुष्यरू
पप्रयोजनलोपात् यथा वापिन्यैष्टौ होतृवरणस्य न होतारं वृणीत इति प्रतिषेधात् औदुंबरत्वेन च खादिरत्वबाधः प्राप्तबाध एव वक्तव्यः शर रामः
कुशन्यायेन चोदकस्य च खादिरत्वविषयत्वे प्राप्त्यभावात्तदनुपपत्तिः स्यादिति उच्यते तार्त्तीयप्रमाण विनिर्मुक्ते नेतरस्य बाधनं तावदप्रा १२

प्तबाधनंप्रकरणंचतार्तीयंतेनतद्विनियुक्तौदुंबरत्वेनेतरबाधनमप्राप्तबाधएव नहि वैकृतेनप्राकृतोबाधःप्राप्तबाधएवेतिकुलधर्मः वस्तुत
स्तुप्राप्तबाधएवायंनचखादिरत्वस्यचोदकाविषयत्वेनप्राप्त्यभावात् कथंतद्बाधःप्राप्तबाधःतद्विषयत्वेनवातेनैवनैराकांक्ष्यात् तौदुंबर
त्वेप्रकरणंविनियोजकंस्यादितिवाच्यं नहिप्राप्तबाधस्थलेचोदकेनपदार्थाःप्राप्यंते तथासतिशास्त्रप्राप्तत्वेनबाधोनस्यात् किंतर्हितानेव
पदार्थान्वस्तुतःप्रापयतीतियेविकृतौनबाध्यंतेतेचपदार्थाःप्रकृतिवच्छब्देनप्राप्यंते इतिभवतिपुरुषस्यभ्रांतिःयथाप्रकृतौकृतंतथाविकृ
तौकर्त्तव्यमितिसर्वेपदार्थाःप्राकृताःकर्त्तव्याइति अतश्चभ्रांतिप्राप्ताःखादिरत्वादयःशास्त्रप्रतिपन्नैरौदुंबरत्वादिभिर्बाध्यंते इतिभवति
तद्बाधःप्राप्तबाधःनचभ्रांतिप्रतिपन्नेनवैधी आकांक्षानिवर्त्तयितुंशक्यते तस्माद्युक्तं उभयाकांक्षारूपप्रकरणासंभवात् विकृतौप्राकृतांगानु
वादेनविधीयमानानामौदुंबरत्वादीनांप्रकरणंविनियोजकमिति पृषदाज्येनानुयाजान्यजतीतिप्रकृतानुवादेनविधीयमानंपृषदाज्यमपि
प्रकरणादिकल्प्यांगमितिकेचिदाचार्याःअस्मात्तातचरणास्तुएवमाहुःपृषदाज्यंहिअनुयाजानुवादेनविधीयते तत्स्वरूपेचानर्थक्यप्राप्तौतैर्न्न॥
विकृत्यपूर्वंलक्षयितुंयुक्तंविप्रकर्षात् किंतुदीक्षणीयावाङ्नियमन्यायेनस्वापूर्वमेवलक्षयितुंयुक्तंसन्निकर्षात् अतएवोत्पवनादीनांप्रोक्ष
णाद्यपूर्वप्रयुक्तत्वमुक्तं नवमे अतश्चविधीयमानस्यपृषदाज्यस्यवाक्यप्रतिपन्नेनानुयाजापूर्वेणैवनैराकांक्ष्यात् नप्रकरणादिकल्प्यपूर्वार्थ
त्वमिति वयंतु अंगीकृत्यापिविकृत्यर्थंब्रूमःभवतुवाविकृत्यर्थत्वंपृषदाज्यस्यतथापिनप्रकरणंविनियोजकंभवतीति यूपपृष्टभावेनहियावत्
खादिरत्वमायाति तावदेवौदुंबरत्वविधानादुभयाकांक्षायुक्तत्वाद्युक्तःप्रकरणविनियोगःएवं यावदनुयाजपृष्टभावेनाज्यमायाति
तावदेवयदिपृषदाज्यंविधीयतेतदोभयाकांक्षासंभवात्प्रकरणविनियोगोभवेत् नत्वेतदस्ति नहिपृषदाज्यंनामद्रव्यांतरंकिंचिदस्ति यदा

ज्यस्यानापन्नं विधीयते औदुंबरत्वमिव खादिरत्वस्यानापन्नं पृषच्छब्दस्य पृषन्मणिरित्यादौ चित्रतावाचित्वेन दृष्टत्वात् पृषदाज्यशब्दस्य चित्राज्यवाचित्वात् अत एव निगमेषु आज्यपानित्येवं वक्तव्यं न तु पृषदाज्यपानित्येवमुक्तं न च यावत्प्राकृतमाज्यमायाति तावदेव चित्राज्यविधानात्प्रकरणाद्विनियोगः संभवतीति वाच्यं· न हि पृषदाज्यशब्देन चित्रतागुणविशिष्टमाज्यं विधीयते विशिष्टविधाने गौरवापत्तेः किंतु प्राकृताज्यानुवादेन चित्रतागुणमात्रं विधीयते लोहितोष्णीषा ऋत्विजः प्रचरंतीतिवत् तदुक्तं दशमे चतुर्थे चरणांत्ये न वा गुणशास्त्रत्वादिति प्राकृतस्यैवाज्यस्य चित्रतागुणमात्रविधानमिति च शास्त्रदीपिका एवं च विकृतेः प्राकृतेनाज्येन क्लृप्तोपकारैः प्रयाजानुयाजैः नैराकांक्ष्ये पश्चाद्विधीयमानस्य चित्रतागुणस्योपहोमादिपूर्वांगवन्न प्रकरणं विनियोजकं संभवति यदि हि प्राकृतस्य कस्यचिद्गुणस्य स्थाने चित्रतागुणो विधीयेत तदा स गुणो यावन्नायाति तावद्धि कृतेर्नैराकांक्ष्याभावाच्चित्रतागुणस्य तावदेव विधानादुभयाकांक्षासंभवात्प्रकरणाद्विनियोगो भवेत्· न च तादृशः प्रकृतौ गुणोस्ति आज्यस्यानुयाजानां च चित्रतागुणस्याग्रे विधानात् तस्य तत्स्थानापन्नत्वाभावाच्च· न चाज्यपृष्टभावेन यावत्प्रकृतं निर्गुणत्वमायाति तावदेवास्य विधानात्प्रकरणसंभव इति वाच्यं निर्गुणत्वस्याविहितत्वेन पाणिकंडूयनवदनंगत्वाद्विकृतेस्तदाकांक्षाभावात् तथा हि ज्योतिष्टोमे दक्षिणादानसमयविहितकृष्णविषाणात्यागस्य द्विरात्रादिषु चोदकप्राप्तस्य प्रथमेह्न्यननुष्ठाने उत्तरे हि दक्षिणादानपूर्वकालीनैः पदार्थैः कृष्णविषाणाकंडूयनस्य शास्त्रविहितत्वेनापेक्षितत्वात् ज्योतिष्टोमे च दक्षिणादानोत्तरकालं पाणिकंडूयनं दृष्टमपि द्विरात्रादिषु प्रथमेह्न्यनुष्ठीयमानैर्दक्षिणादानकालीनैः पदार्थैर्नापेक्ष्यते तस्य प्रकृतावार्थसिद्धत्वेनाशास्त्रीयत्वादिति एवं निर्गुणत्वस्याविहितत्वेन विकृतेस्तदपेक्षा नास्ति तस्मादुभयाकांक्षाया असंभवात्पृषदाज्यस्य न प्रकरणाद्विनियोगः संभवतीत्यलमतिविस्तरेण तत्सिद्धं

महाप्रकरणं प्रकृतावेव विनियोजकं विकृतौ तु यत्प्रकृतधर्मानुवादेन विधीयते तस्य विनियोजकं न तु केवलं विधीयमानस्यापूर्वांगस्येति यत्तु विकृतावपि प्राकृतधर्मानुवादेन विधीयमानयोर्धर्मयोरंतराले ऽपूर्वमप्यंगं केवलं पठ्यते तदपि प्रकरणेन विनियुज्यते यद्यपि विकृतेः कथंभावाकांक्षा प्राकृतैरेवांगैः शाम्यति तथापि यत्र प्राकृतांगानुवादेन धर्मविधानं तत्र तद्विधानं यावद्भवति तावत्कथंभावाकांक्षा निवर्तते ऽतो विकृतेराकांक्षावत्वादंतराले विहितस्याप्यपूर्वस्यांगस्य भाव्याकांक्षासत्वात् युक्तं तस्य प्रकरणात्प्रकृत्यर्थत्वं यथामनहोमेषु ते हि प्राकृतांगेन विधीयमानयोर्धर्मयोरंतराले विधीयंते इत्युक्तं तंत्ररत्नादावित्यास्तां तावत् फलभावनाया अंतराले यदंगभावनायाः प्रकरणं तदवांतरप्रकरणं तच्चाभिक्रमणादीनां प्रयाजादिषु विनियोजकं तच्च संदंशेन ज्ञायते तदभावे अविशेषात्सर्वेषां फलभावनाकथंभावेनग्रहणात् संदंशो नाम एकांगानुवादेन विधीयमानयोरंगयोरंतरालेन विहितत्वं यथाभिक्रमणं तद्धि समानयते जुह्वामुपभृत इत्यादिना प्रयाजानुवादेन किंचिदंगं विधाय विधीयते पश्चादपि प्रयाजानुवादेन यो वै प्रयाजानां मिथुनं वेदेत्यादिना किंचिदंगं विधीयते अतः प्रयाजागमध्ये पठितमभिक्रमणं तदंगं भवति तत्कथंभावाकांक्षाया अशांतेः तदुक्तं परप्रकरणस्थानामंगेष्वित्यादिभिः स्त्रिभिः ज्ञाते पुनश्चैतैरेव संदंशेन तदिष्यत इति न चांगभावनायाः कथंभावाकांक्षाभावात्कथं प्रयाजभावनाकथंभावेनाभिक्रमणं गृह्यत इति वाच्यं भावनासाम्येन सर्वत्र कथंभावाकांक्षायाः सत्वात् प्रयाजैरपूर्वं कृत्वा यागोपकारं भावयेदित्युक्ते यो नाम न जानाति प्रयाजैरपूर्वं कर्तुं तस्य भवत्येव कथंभावाकांक्षा कथमेभिरपूर्वं कर्तव्यमिति सा च संदंशपतितैर्वाचनिकैः स्मार्तैश्चाचमनादिभिः शाम्यति तदभावे च स्वरूपनिष्पादनेन दर्विहोमन्याये न निवर्तते दर्विहोमेषु हि स्वरूपनिष्पादनातिरिक्तस्तथाव्यापारो न श्रूयते नाप्यतिदेशेन तत्प्राप्तिः यागीयानां धर्माणां तावन्नातिदेशो यागत्वे

नहोमत्वेन वैलक्षण्यात्· नापि होमीयानां कस्य धर्मः कस्मिन्होमे प्रवर्त्तते इति विशेषनिर्णायेमानाभावात्· अतो धर्मप्राप्त्यभावात्· दर्वि
होमे रिष्टं भावयेत् कथमित्युत्पन्नाप्याकांक्षास्वरूपनिष्पादनेनैव शाम्यति एवं येष्वंगेषु संदंशाद्यभावः तत्रोत्पन्नाप्याकांक्षा तेनैव निवर्त्त
ते न तु सर्वेषां तदभावः तस्माद्युक्तमुक्तं अभिक्रमणं प्रयाजांगमिति तच्चेदमवांतरप्रकरणं महाप्रकरणाद्दुर्बलीयः संदंशपतितानां धर्मा
णां कैमर्थ्याकांक्षायां प्रधानापूर्वात् प्रयाजाद्यपूर्वस्य झटित्युपस्थितेरिति प्रकृतमनुसरामः तत्सिद्धमुभयविधस्य प्रकरणस्य विनियोज
कत्वं तदिदं स्थानादिप्रमाणात्प्रबलं यत्र हि स्थानादंगत्वं तत्रान्यतरस्य प्रकारांतरेण निराकांक्षत्वं न च साकांक्षं निराकांक्षेण संबंद्धुं योग्यं विना
कांक्षोत्थापनेन· अतश्चान्यतराकांक्षया यावदुभयाकांक्षारूपप्रकरणकल्पनद्वारा वाक्यादिकं कल्पयितुमारभ्यते तावत् झटिति प्रक
रणेन वाक्यादिकं कल्पयित्वा विनियोगः क्रियत इति स्थानात्प्रकरणस्य बलीयस्त्वं· अत एव विदेवनादयो धर्माः अभिषेचनीयसंनिधौ पठि
ता अपि नाभिषेचनीयस्यांगं तेषां तदंगत्वं भवेत्स्थानान्न तु भवेत्प्रकरणात्· अभिषेचनीयस्याव्यक्तचोदनाचोदितत्वेन ज्योतिष्टोमविकार
त्वात्· प्राकृतैरेव धर्मैर्निराकांक्षत्वात्· किंतु प्रकरणाद्राजसूयांगं· ननु राजसूयेन स्वाराज्यकामो यजेतेत्यत्र राजसूयशब्दस्तावन्नामधेयत्वा
दाख्यातपरतंत्रः यत्राख्यातं वर्त्तते तत्रैव वर्त्तते· न च दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यत्र यथा दर्शपूर्णमासपदं नामधेयमपि नाख्यात
परतंत्रं· तत्र हि यजेतेत्यत्राख्याते अविशेषात्सर्वानेव प्राकृतानाग्नेयादीन्प्रयाजादींश्चाभिधातुं समर्थः दर्शपूर्णमासपदं त्वाग्नेयादीनेव व
दति न सर्वान् तथ्यत्र न तदाख्यातपरतंत्रं तथा राजसूयपदमपि किं न स्यादिति वाच्यं· प्रसिद्धेन हि पदेनाप्रसिद्धं निर्णीयते यथाहुः पदमज्ञातसं
दिग्धं प्रसिद्धैरपृथक् श्रुति निर्णीयते निरूढं तु न स्वार्थादपनीयते इति दर्शपूर्णमासपदं तु कालनिमित्तं तद्योगश्चाग्नेयादिषूत्पत्तिवाक्यैरवग
म्य

न्यर पागे०वगन४

तः अतस्तद्वाचित्वेनदर्शपूर्णमासपदंप्रसिद्धं नचाग्नेयादीनांवहुत्वाद्विवचनांतत्वमस्यानुपपन्नमितिवाच्यं· विद्वद्वाक्यद्वयसिद्धसमुदायद्व
याभिप्रायेणातदुपपत्तेः एवंचदर्शपूर्णमासपदस्याग्नेयादिवाचित्वेनिर्णीतेयजेतेत्याख्यातमपितानेववदतिनहि तदुक्तोस्वार्थत्यागोभव
तिराजसूयपदंत्वनिर्णीतार्थं अतस्तदाख्यातपरतंत्रमेव· तच्चाविशेषात्सर्वेष्विष्टि पशुसोमेषुवर्त्ततेतेतं तत्त्वाद्राजसूयपदमपितानेववदति·
नचराजसूयशब्दस्यराजासूयतेयत्रेतिव्युत्पत्त्यासोमाभिषवनिमित्तत्वात्तस्यसोममभिषुणोतीतिवाक्येनसोमयागेष्ववगतत्वात्तद्वाचित्वमेववने
ष्टिपशुवाचित्वमितिवाच्यं नह्यभिषेचनीयादिसोमयागेषुअभिषवःप्रत्यक्षेणवाक्येनचोदितोस्ति तद्वाक्यस्यज्योतिष्टोमेसत्त्वात् अतिदेशात्त
त्संबंधोवगतइतिचेत् नातिदेशस्यफलसंबंधोत्तरकालीनत्वेनराजसूयेनस्वाराज्यकामोयजेतेत्येतद्वाक्यार्थावगत्युत्तरकालीनत्वात् अनेन
हिवाक्येनफलसंबंधेवोधितेपश्चात्कथंभावाकांक्षायामतिदेशकल्पनासंभवात् अतस्ततःप्रागेवेतद्वाक्यार्थोवर्णनीयः तदाचाभिषवस्यानव
गतत्वाद्राजसूयपदमप्रसिद्धार्थमेव अतएवराजसूयपदमव्युत्पन्नमश्वकर्णशब्दवदित्युक्तंसांप्रदायिकैः एवंचासिद्धार्थत्वेनाख्यातपरतंत्र
त्वाद्राजसूयपदेनेष्टिपशुसोमयागाउच्यंतेतेचैतेस्तेः प्राक्तनैर्धर्मैर्न्निराकांक्षाइतिनप्रकरणंविदेवनादीनांराजसूयेविनियोजकं उभयाकांक्षाया
अभावात् नचप्रातस्विकरूपैर्न्नैराकांक्षेपिनराजसूयत्वेनरूपेणनैराकांक्ष्यमितिवाच्यं आकांक्षाद्वयेप्रमाणाभावात् किंचप्रातस्विकरूपैर्याकथं
भावाकांक्षासापिफलसंबंधोत्तरकालं सचराजसूयत्वेननतुप्रातस्विकरूपैः राजसूयत्वेनचफलसंबंधेउत्पन्नायाः कथंभावाकांक्षायाः विदेव
नादिभिःशांतेरतिदेशकल्पनमेवनस्यात् यदिहिसामान्यरूपेणप्रातस्विकरूपेणचफलसंबंधविधायकवाक्यद्वयंभवतितदायुज्येताकांक्षा
द्वयानुसारेणविदेवनादीनामतिदेशिकादीनांचांगानांसंबंधोनतुतदस्तितस्मात्प्राकृतधर्मैर्न्नैराकांक्षान्नविदेवनादीनांप्रकरणंविनियोजकमि



तिचेत्सत्यं अत एव सांप्रदायिकैर्विदेवनादीनां संदंशो दर्शितः राजसूयत्वपुरस्कारेण ये धर्मा विधीयंते राजसूयाय यज्ञेना उत्सुनाति इत्येवमाद
य· तन्मध्ये विदेवनादयः पठ्यंते अतस्ते सर्वे राजसूयांगं प्रयाजानुवादेन विधीयमानधर्ममध्ये पठितं प्रयाजाभिक्रमणवत् तस्माद्युक्तमु
क्तं विदेवनादीनां प्रकरणाद्राजसूयांगत्वमिति तत्सिद्धं प्रकरणस्य स्थानाद्बलीयस्त्वमिति देशसामान्यं स्थानं तच्च द्विविधं पाठसादेश्यमनु
ष्ठानसादेश्यं चेति यथाहुः तत्र क्रमो द्विधैवेष्टो देशसामान्यलक्षणः पाठानुष्ठानसादेश्याद्विनियोगस्य कारणमिति स्थानं क्रमश्चेत्यनर्थांतरं पा
ठसादेश्यमपि द्विविधं यथासंख्यापाठः संनिधिपाठश्चेति तत्र ऐंद्राग्नमेकादशकपालं निर्वपेद्वैश्वानरं द्वादशकपालं निर्वपे दित्येवं क्रमविहि
तेष्टिषु इन्द्राग्नी रोचना दिवः इत्यादीनां याज्यानुवाक्यमंत्राणां यथासंख्यं प्रथमस्य प्रथमं द्वितीयस्य द्वितीयमित्येवं यो विनियोगः स यथासंख्य
पाठात् प्रथमपठितमंत्रस्य हि कैमर्थ्याकांक्षायां प्रथममतो विहितमेव कर्म प्रथममुपतिष्ठते सामान्यदेशत्वात् यानि तु वैकृतान्यंगानि प्रा
कृतांगानुवादेन विहितानि संदंशपतितानि तेषां विकृत्यर्थत्वं संनिधिपाठात् तेषां हि कैमर्थ्याकांक्षायां फलवद्विकृत्यपूर्वमेव भाव्यत्वेन संब
ध्यते उपस्थितत्वात् अत एव तेषु न विश्वजिन्न्यायावतारः स्वतंत्रफलार्थत्वे विकृतिसंनिधिपाठानर्थक्यापत्तेः पशुधर्माणामग्नीषोमीया
र्थत्वमनुष्ठानसादेश्यात् औपवसथ्ये ह्यग्नीषोमीयः पशुरनुष्ठीयते तस्मिन्नेव दिने ते धर्माः पठ्यंते अतस्तेषां कैमर्थ्याकांक्षायां अनुष्ठेयत्वेनो
पस्थितं पश्वपूर्वमेव भावनात्वेन संबध्यते· अतो युक्तमनुष्ठानसादेश्यात्तदर्थत्वं तेषां· न च पाठसादेश्यादेव तत्किं न स्यादिति वाच्यं· आग्नीषोमी
यस्य पशोः क्रयसन्निधौ पाठात्· न च क्रयसन्निधौ पाठे तदनुष्ठानमपि तत्र स्यादिति वाच्यं· स एष द्विदेवत्यः पशुरौपवसथ्ये ह्नि आलब्धव्यमि
तिवचनात्तदनुपपत्तेः न च स्थानात्प्रकरणस्य बलीयस्त्वेन पशुप्रमापाठानां धर्माणां ज्योतिष्टोमार्थत्वमेव किं न स्यादिति वाच्यं· तस्य सोमयाग

त्वेन पशुधर्मग्रहणेयोग्यत्वात्· अत आनर्थक्यप्रतिहितानां विपरीतं बलाबलमिति न्यायात् स्थानात् पशुयागत्वमेव धर्माणां युक्तं: न च तेषां तदर्थत्वं
प्रकरणादेव किं न स्यादिति वाच्यं· अग्नीषोमीयपशुं भावाकांक्षायाः क्लृप्तोपकारैः प्राकृतधर्मैरेवोपशांतत्वात्· सहिसानाय्ययागप्रकृतिकः उभयोः
पशुप्रभवत्वसामान्यात्· तदुक्तं सान्नाय्यं वा तत्प्रभवत्वादिति सान्नाय्यं दधि पयसी तत्रापि पशुयागः पयोयागप्रकृतिकः साक्षात्पशुप्रभवत्वात् अ
तस्मादक्प्राप्तैस्तद्धर्मैर्निराकांक्षत्वान्न पशुयागे धर्माणां प्रकरणं विनियोजकं किंतु स्थानमेव तदेवं निरूपितः संक्षेपतः स्थानविनियोगः तच्च
समाख्यातः प्रबलं स्थानविनियोगे हि पदार्थयोर्देशसामान्यलक्षणः संबंधः प्रत्यक्षः समाख्याविनियोगे तु संबंधो न प्रत्यक्षः पदार्थयोर्भिन्नदेश।
त्वात्· न च सा संबंधवाचिका यौगिकानां शब्दानां द्रव्यवाचकत्वेन संबंधावाचकत्वात्· तथाहि समाख्या संबंधसामान्यवाचिका स्या द्विशेषवा
चिका वा नाद्यः तदुक्तौ प्रयोजनाभावात्· सर्वयौगिकशब्दानां पर्यायत्वापत्तेश्च द्वितीयेऽवश्यं संबंधिनौ वाच्यौ तदंतरेण संबंधे विशेषाभावात्
तत्प्रतिपत्तिमंतरेण तदप्रतिपत्तेश्च अतश्चावश्यं संबंधिवाचकत्वं समाख्याया वक्तव्यं· तथा च न संबंधवाचकत्वं संबंधिप्रतिपत्त्यैव वाक्या।
र्थप्रतिपत्तिन्यायेन तत्प्रतिपत्तिसंभवे तत्र शक्तिकल्पने गौरवात् यथाहुः सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते न हि संबंधवाच्यत्वं संभवत्य
ति गौरवादिति· तथा पाकं तु पचिरेवाह कर्तारं प्रत्ययस्तथा पाकयुक्तः पुनः कर्ता वाच्यो नैकस्य कस्यचित् इति तथा च न समाख्या संबंधवाचि
का· होतृचमस इत्यादिका तु वैदिकी समाख्या निषादस्थपतिशब्दवन्न षष्ठ्यर्थसंबंधवाचिका नापि वाक्यैकत्तद्वाचिका तस्याः पदत्वेनाप्रमाण
त्वात् पौरोडाशिकमित्यादि समाख्यास्तु अतिदुर्बलाः लौकिकत्वेन पुरुषप्रत्ययसापेक्षत्वात् काण्डगोचरत्वेन तत्तत्पदार्थगोचरत्वाच्च काण्डवा।
चकत्वमपि न कांडत्वेन किंतु पौरोडाशिकत्वादिनैव· न ह्येकहायनीशब्दो द्रव्यवाचकोपि गोत्वेन तद्वदिति किं तर्हि एकहायनीत्वेनैव स्थानवि

रक्ता

न्या·मी· नियोगेतुपदार्थयोर्विशेषपुरस्कारेणैवसंबंधःप्रत्यक्षप्रमाणप्रतिपन्नः अतश्चसमाख्यामुपलभ्यनूनमनयोःपदार्थयोःसंबंधोस्तीतियावत्क
१६ ल्प्यतेतावत्प्रत्यक्षप्रतिपन्नेनसंबंधेनपरस्परमाकांक्षाकल्प्यतेतदभावे संबंधानुपपत्तेः कल्पितसंबंधेनचयावदितरत्राकांक्षादिकल्प्यतेता
वदन्यत्राकांक्षयावाक्यादिकल्पनयाविनियोगःक्रियतइतिसिद्धंस्थानस्यसमाख्यातः प्राबल्यं· अतएवशुंधनमंत्रःसान्नाय्यपात्रांगंपाठसा
देश्यात् नतुपौरोडाशिकसमाख्ययापुरोडाशपात्रांगमितिसमाख्यायौगिकःशब्दःसाचद्विधा वैदिकीलौकिकीच तत्रहोतुश्चमसभक्षणांगत्वं
होतृचमसइतिवैदिकीसमाख्यया अध्वर्योस्तत्तत्पदार्थांगत्वंलौकिक्याधूर्यवमितिसमाख्ययेतिसंक्षेपतः श्रुत्यादीनिषट्प्रमाणानि· एतत्सहकृ
तेनविनियोगविधिनासंनिधादिभिरुपकृत्यदर्शपूर्णमासाभ्यांयजेतेत्येवरूपेणयानिविनियुज्यंतेतान्यंगानि· द्विविधानि· सिद्धरूपाणिक्रियारू
पाणिचेतितत्रसिद्धानिजातिद्रव्यसंख्यादीनितानिचदृष्टार्थान्येवक्रियारूपाणिचद्विविधानिगुणकर्माणिचेति एतान्येवसंनिपत्योपकारीणिआ
रादुपकारकाणीतिचोच्यंते तत्रकर्मांगद्रव्योद्देशेनविधीयमानंकर्मसंनिपत्योपकारकंयथावघातप्रोक्षणादितच्चदृष्टार्थमदृष्टार्थंदृष्टादृष्टार्थं
चदृष्टार्थमवघातादि अदृष्टार्थंप्रोक्षणादिदृष्टादृष्टार्थंपशुपुरोडाशयागादि तच्चद्रव्यत्यागांशेनादृष्टंदेवतोद्देशेनचदेवतास्मरणंदृष्टंकरोति इ
दमेवसामवायिकंकर्मेत्युच्यते तच्चसंनिपत्योपकारकंद्विविधंउपयोक्ष्यमाणार्थमुपयुक्तार्थंचेति· तत्रावघातप्रोक्षणाद्युपयोक्ष्यमाणार्थंव्री
हीणांयागेउपयोक्ष्यमाणत्वात् प्रतिपत्तिकर्मेडाभक्षणादिउपयुक्तपुरोडाशसंस्कारकंउपयुक्तस्याकीर्णकरणानिवर्तकंकर्मप्रतिपत्तिकर्मउ
पयुक्तसंस्कारार्थंचकर्म उपयोक्ष्यमाणसंस्कारार्थाद्दुर्बलंउपयुक्तापेक्षया उपयोक्ष्यमाणेत्यादरात् अतएवप्रापणीयनिष्कासेउदयनीयमनु रामः
निर्वपतीत्यत्रनिष्कासस्यनिर्वापार्थत्वंनतुतस्यतदर्थत्वंनिष्कासस्योपयुक्तत्वादित्युक्तमेकादशेतच्चसंनिपत्योपकारकं आरादुपकारकाद्बली १६
प्रधानकर्माणि

यः नन्ववघातादीनामभवतु बलीयः तस्य दृष्टार्थत्वात् आरादुपकारकस्य चादृष्टार्थत्वात् दृष्टे च संभवति अदृष्टार्थस्यान्याय्यत्वात् प्रोक्षणादिस
न्निपत्योपकारकं तु कथं बलीयः उभयोरदृष्टार्थत्वाविशेषात् किं चारादुपकारकं साक्षात्प्रधानांगं तस्यान्योद्देशेनाविधानात् सन्निपत्योपकारकं तु
अंगांगं कार्मीणव्रीह्याद्युद्देशेन विधानात् अंगांगापेक्षया च साक्षादंगं बलीयः अंगगुणविरोधे तादर्थ्यादिति न्यायात् अत एव इष्ट्या पशुना सोमेन
यजेत सोमावास्यायां पौर्णमास्यां वा यजेतेत्यविशेषविधाने पर्वानुग्रहः सोमयागस्य न क्रियते न तु दीक्षणीयादेः अतः कथं सन्निपत्योपकारकस्य
बलीयस्त्वं उच्यते सत्यप्यदृष्टार्थत्वाविशेषे सन्निपत्योपकारकमारादुपकारकाद्बलीयः सन्निपत्योपकारके हि कर्मणि उपकार्योपकारकयोर्व्री
हिप्रोक्षणयोः संबंधो वाक्यलभ्यः उपकारमात्रं तु कल्प्यम् आरादुपकारकस्थले तु दर्शपूर्णमासप्रयाजयोः संबंधः कल्प्यः उपकारोऽपि किं च आराद्
पकारकस्थले हि प्रकरणं विनियोजकं इतरत्र व्रीहीन्प्रोक्षतीति वाक्यमेव व्रीहिपदेनापूर्वसाधनलक्षणां कृत्वा कृतो विनियोजकमिति बलीयस्त्वं।
यच्चोक्तं अंगगुणविरोधे तादर्थ्यादिति न्यायेन दुर्बलत्वमिति तदसत् न हि व्रीह्याद्युद्देशेन विधीयमानं प्रोक्षणादि तदर्थं भवति तत्स्वरूपे आन
र्थक्यात् किं तु तत्संस्कारद्वारा क्रत्वर्थमेव सन्निपत्योपकारकाणामुत्पत्त्यपूर्वप्रयुक्तत्वस्य वक्ष्यमाणत्वात् अत उभयविधमप्यंगजातं क्रत्व
र्थमेवेति नांगगुणविरोधन्यायावतारः दीक्षणीयादेः पूर्वानुग्रहस्तु दीक्षणीयाद्यर्थ एव तस्य तदपूर्वप्रयुक्तत्वात् अतो युक्तं साक्षात्प्रधानांगेन प
र्वानुग्रहेण स बाध्यत इति तत्सिद्धं सन्निपत्योपकारकाद्बलीयस्त्वं अत एव स्थाणौ स्था एवाहुति जुहोति इति विहितास्या एवाहुतिर्यूपव्रश्चनेति
स्थाणुद्वारा यूपसंस्कारार्था देवदत्तधारितायाः स्रज सुविदेशविधानमिव देवदत्तसंस्कारार्थं न तु स्या एवाहुतिरारादुपकारकेत्युक्तं दशमे इति दि
क् द्रव्याद्युद्दिश्य केवलं विधीयमानं कर्म आरादुपकारकं यथा प्रयाजादि तदेवं निरूपितं हि विधमप्यंगजातं तच्च न यागस्वरूपप्रयुक्तं स्वरूपे

 आनर्थक्यात् तदंतरेणापि तत्सिद्धेः किंत्व पूर्वप्रयुक्तमेव न हि तदंतरेणापूर्वं भवतीत्यत्र किंचित्प्रमाणमस्ति तस्यादृष्टत्वात्· न चैवं प्राधान्या
 दृष्टत्वाच्च फलप्रयुक्तत्वमेव किं न स्यादिति वाच्यं· फलभावनायां यागस्य करणत्वात्· अंगानां च करणानुग्राहकत्वात् तदर्थत्वे बुद्धे तत्र च
नर्थक्यप्रसक्तौ तेन यागेन स्वापूर्वमेवोपस्थाप्यते सन्निकर्षात् दीक्षणीयादिशब्देनेव तदपूर्वं न तु फलमुपस्थाप्यते विप्रकर्षात् अतो न तत्प्र
युक्तत्वमंगानां अत एव अगन्म सुवः सुवरगन्मेति मंत्रो विकृतावूहितव्य इत्युक्तं नवमे फलदेवतयोश्चेत्यत्र फलप्रयुक्तत्वे तु सौर्यादिविकृतिषु
स्वर्गरूपफलाभावान्मंत्रो न प्रवर्त्तेत नतरां चोहितव्यः स्यादिति तत्सिद्धमंगानामन्यप्रयुक्तत्वानुपपत्तेरपूर्वप्रयुक्तत्वं तत्रापि सन्निपत्योपका
रकाणां द्रव्यदेवतादिसंस्कारद्वारा यागस्वरूपे उपयोगादुत्पत्त्यपूर्वार्थत्वं· अत एव औषधधर्माणां विघातादीनामाज्ये प्रवृत्तिः तेषामाग्नेयापूर्व
प्रयुक्तत्वात्· आज्यस्य च तदर्थत्वाभावादित्युक्तं द्वितीये आरादुपकारकाणां तु स्वरूपेनुपयोगात्· परमापूर्वार्थत्वं तत्रोत्पत्त्यपूर्वस्य यागस्वरू
पानुष्ठानानंतरमेवोत्पद्यमानत्वात्सन्निपत्योपकारकाणां पूर्वांगानां तदुत्पत्तावुपयोगः उत्तरांगानां तु तेषां तत्स्थितावुपयोगः परमापूर्वस्य तु सांगप्र
योगानुष्ठानानन्तरमेव उत्पद्यमानत्वात् सर्वेषामारादुपकारकाणां तदुत्पत्तौ प्रयोगबहिर्भूतस्य तु तत्स्थितावुपयोगः यथा बृहस्पतिसवस्य
वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेति वाजपेयोत्तरकालमंगत्वेन विहितस्य वाजपेयापूर्वस्थितावुपयोगः तस्य प्रागेवोत्पन्नत्वादित्युक्तं चतु
र्थे तत्सिद्धं सर्वेषामंगानामपूर्वार्थत्वं प्रकृतमनुसरामः तदेवं निरूपितः संक्षेपतो विनियोगविधिः प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिः
स चांगवाक्यैकवाक्यतामापन्नः प्रधानविधिरेव स हि सांगं प्रधानमनुष्ठापयन् विलंबे प्रमाणाभावात् अविलंबापरपर्यायं प्रयोगप्राशुभावं वि 
धत्ते न च विलंबवदविलंबेपि प्रमाणाभाव इति वाच्यं विलंबे हि अंगप्रधानविध्येकवाक्यतावगततत्साहित्यानुपपत्तिः प्रसज्यते न हि विलंबेन 

क्रियमाणयोः पदार्थयोः सहकृतत्वमिति साहित्यं व्यवहरंति नचैवं साहित्यानुपपत्त्या समकालमेव स्यान्नत्वविलंबः अव्यवधानेन पूर्वोत्तरकालं क्रियमाणयोः पदार्थयोरविलंबेन कृतमिति व्यवहारादिति वाच्यं अनेकपदार्थानामेकस्मिन्कालेनुष्ठानानुपपत्तेः नचैतावत्कर्त्तृसंप्रतिपादने नानुष्ठानं किन्नस्यादिति वाच्यं तस्यैतस्य यज्ञस्य चत्वार ऋत्विज इत्यादिना कर्त्तॄणां नियतत्वात् तस्मादंगवाक्यैकवाक्यतामापन्नः प्रधानविधिरेकवाक्यावगततत्साहित्यं विदधदुक्तविधया एककालानुष्ठानानुपपत्तेरविलंबं विधत्त इति सिद्धं प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिरिति सचाविलंबो नियते क्रमे आश्रियमाणो भवति अन्यथा किमेतदनंतरमेतत्कर्त्तव्यमेतदनंतरमेवेति प्रयोगविशेषापत्तेः अतः प्रयोगविधिरेव स्वविधेयप्रयोगप्राशुभावसिद्ध्यर्थं नियतक्रममपि पदार्थविशेषणतया विधत्ते तत्र क्रमो नाम विततिविशेषः पौर्वापर्यरूपो वा तत्र च षट् प्रमाणानि श्रुत्यर्थपठनस्थानमुख्यप्रवृत्त्याख्यानि तत्र क्रमपरं वचनं श्रुतिः तद्द्विविधं केवलक्रमपरं तद्विशिष्टपदार्थपरं चेति तत्र वेदं कृत्वा वेदीं करोतीति केवलक्रमपरं वेदिकरणादेर्वचनांतरेण विहितत्वात् वषट्कर्त्तुः प्रथमभक्ष इति तु क्रमविशिष्टपदार्थपरं एकप्रसरताभंगभयेन भक्ष्यानुवादेन क्रममात्रस्य विधातुमशक्यत्वात् सेयं श्रुतिरितरप्रमाणापेक्षया बलवती तेषां वचनकल्पनद्वारा क्रमप्रमाणत्वात् अत एवाश्विनस्य पाठक्रमात् तृतीयस्थाने ग्रहणप्रसक्तौ आश्विनो दशमो गृह्यते इति वचनाद्दशमस्थाने ग्रहणमित्युक्तं यत्र प्रयोजनवशेन निर्णयः स आर्थक्रमः यथाग्निहोत्रहोमयवागूपाकयोः अत्र हि यवाग्वा होमार्थत्वेन तत्पाकः प्रयोजनवशेन पूर्वमनुष्ठीयते सचायं पाठक्रमाद्बलवान् यथापाठं ह्यनुष्ठाने दृष्टप्रयोजनबाधः अदृष्टार्थत्वं च स्यात् नहि होमानंतरं। क्रियमानंतरं क्रियमाणस्य किंचिद्दृष्टं प्रयोजनम् पदार्थबोधकवाक्यानां यः क्रमः स पाठक्रमः॥ तस्माच्च पदार्थानां क्रम आश्रीयते येन हि क्रमेण वाक्यानि पठितानि तेनैव क्रमेणाधीतानि ॥

वायंमंत्रपाठो २

न्या·मी· अर्थप्रत्ययंजनयंति यथार्थप्रत्ययंच पदार्थानामनुष्ठानात् स च पाठो द्विविधो मंत्रपाठो ब्राह्मणपाठश्चेति तत्राग्नेयाग्नीषोमीययोस्तत

१८ याजानुवाक्यानां क्रमाद्यः क्रम आश्रीयते स मंत्रपाठक्रमात् स च ब्राह्मणपाठक्रमाद्बलवान् अनुष्ठाने ब्राह्मणवाक्यापेक्षया मंत्रवाक्यस्यांत
रंगत्वात् ब्राह्मणवाक्यं हि प्रयोगाद्बहिरेवेदमेवं कर्त्तव्यमित्येवम् अवबोध्य कृतार्थमिति न पुनः प्रयोगकाले व्याप्रियते मंत्राः पुनरनन्यप्रयो
जनाः प्रयोगसमवेतार्थस्मारका इति वक्ष्यामः तेनानुष्ठानक्रमस्य स्मरणक्रमाधीनत्वात् तत्क्रमस्य च मंत्रक्रमाधीनत्वादंतरंगो मंत्रपाठ इत
रस्माद्धिति बलवान् अत एवाग्नेयाग्नीषोमीययोर्ब्राह्मणपाठादादावग्नीषोमीयानुष्ठानं पश्चादाग्नेयानुष्ठानमित्येवं क्रमं बाधित्वा मंत्रपाठादा
दावाग्नेयानुष्ठानं पश्चादग्नीषोमीयस्येत्युक्तं प्रयाजानां समिधो यजति तनूनपातं यजतीत्येवं विधाय कृतार्थानि तथापि प्रयाजानां स्मारकान्त
रस्याभावात्तान्येव स्मारकत्वेन स्वीक्रियंते तथा च येन क्रमेणातान्यधीतानि तेनैव क्रमेणार्थस्मरणं जनयंतीतियुक्तं तेनैव क्रमेण तेषामनुष्ठा
नमिति तत्सिद्धं प्रयाजानां ब्राह्मणपाठक्रमात् क्रम इति ननु प्रयाजेषु प्रयोगसमवेतार्थस्मारकत्वं विधायकत्वेन कृतार्थानां ब्राह्मणवाक्यानां कि
मिति स्वीक्रियते प्रयोगसमवेतार्थस्मारकाणां याज्यामंत्राणामाग्नेयादिष्विवात्रापि सत्वात् न च तेषां देवतास्मारकत्वात्कर्मस्मारकत्वेन ब्राह्म
णवाक्यं स्वीक्रियत इति वाच्यम् आग्नेयादिष्वपि कर्मस्मारकत्वेन तत्स्वीकारापत्तेः न चेष्टापत्तिः तथा सति ब्राह्मणपाठान्मंत्रपाठस्य बलीय
स्त्वं न स्यात् तद्बलीयस्त्वे हि मंत्राणां प्रयोगसमवेतार्थस्मारकत्वमितरस्य तदस्मारकत्वमेवास्तु यदि च कर्मस्मारकत्वं ब्राह्मणवाक्यस्य तर्हि तं
त् स्मारकत्वेन ब्राह्मणवाक्यस्यांतरंगत्वादन्तरंगभूतदेवतास्मारकत्वेन च वमंत्राणां बहिरंगत्वान्मंत्रपाठाद्ब्राह्मणपाठस्यैव बलीयस्त्वं स्या रामः
त् तथा च मंत्रतस्तु विरोधे स्यादिति पांचमिकाधिकरणविरोधः तत्र हि ब्राह्मणपाठान्मंत्रपाठस्य बलीयस्त्वादादावाग्नेयानुष्ठानं पश्चादग्नी १८

कवाक्यक्रमाद्यः क्रमः स ब्राह्मणपाठक्रमः अत्र च यद्यपि ब्राह्मणवाक्यानि यविधाय ८

षोमीयस्येत्युक्तम् अथाग्नेयादिषु याज्यामन्त्राः स्वदेवताप्रकाशनद्वाराकर्मप्रकाशकास्स्युज्यमानद्रव्योद्देश्यत्वरूपत्वाद्देवत्वस्येति चेत्तुल्यं प्र
याजेषु तत्रापि हि याज्यामन्त्रदेवताप्रकाशकाः प्रयाजेषु देवताया मन्त्रवर्णिकत्वात् तथा च प्रयाजेषु याज्यामन्त्राणां देवताप्रकाशनद्वारा
कर्मप्रकाशकत्वात्तत्क्रमो मन्त्र— पाठादेव स्यात् न तु ब्राह्मणपाठक्रमात् न च मन्त्रपाठस्यान्यादृशत्वात्प्रयाजक्रमो ब्राह्मणपाठक्रमादे
वेति वाच्यं अन्यादृशत्वे तस्यैव क्रमस्यानुष्ठानं स्यात् मन्त्रक्रमस्य बलीयस्त्वात् अभ्यासाधिकरणे च वार्त्तिककृता क्रम विनियुक्तेवं लिंगक्रमं
त्रवर्णित्यादिना प्रयाजेषु याज्यामन्त्राणां क्रमविनियोग उक्तः नवमे तन्त्ररत्ने समिधोऽग्नेआज्यस्य व्यन्तु इत्यादिभिः क्रमप्रकरणप्राप्तैर्मन्त्रैर्देव
तागुणत्वेन समर्प्यन्ते इत्युक्तं मन्त्राणामन्यादृशक्रमत्वे तदनुपपत्तिः स्यात् तत्कथं प्रयाजेषु ब्राह्मणपाठक्रमात्क्रम इत्युच्यते सत्यमेतत् त
थापि यत्रार्थस्मारका मन्त्रा न सन्त्येव यथा तूष्णीं विहितेषु कर्मसु तेषां क्रमो ब्राह्मणपाठक्रमात् तत्र तेषामेव प्रयोगसमवेतार्थस्मारकत्वात् प्रया
जोदाहरणं तु कृत्वा चिन्तयात्र ब्राह्मणवाक्यानां प्रयोगसमवेतार्थस्मारकत्वाभावात् यथाहुरर्थवादचरणे वार्त्तिककाराः प्रयाज्यादिवाक्या
न्यर्थं समर्पयन्त्येव रितार्थानि स्वरूपसंस्पर्शे सत्यपि प्रयोज्यतां न प्रतिपद्यन्ते इति तस्मात्समन्त्रककर्मणां पाठक्रमो मन्त्रपाठात् अमन्त्रककर्मणां क्रमस्तु
ब्राह्मणपाठक्रमादेवेति दिक् प्रकृतौ नानादेशानां पदार्थानां विकृतौ वचनादेकस्मिन्दे ——— शेऽनुष्ठाने कर्त्तव्ये यस्य देशेऽनुष्ठीयन्ते तस्य प्रथ
ममनुष्ठानमितरयोस्तु पश्चादयं यः क्रमः स स्थानक्रमः स्थानं नाम उपस्थितिः यस्य हि देशेऽनुष्ठीयन्ते तत्पूर्वतने पदार्थे कृते स एव प्रथममुपस्थि
तो भवतीति युक्तं तस्य प्रथममनुष्ठानं अत एव साद्यस्के अग्नीषोमीयसवनीयानुबन्ध्यानां सवनीयदेशे सहानुष्ठाने कर्तव्ये आदौ सवनीयपशोर
नुष्ठानं तस्मिन्देशे आश्विनग्रहणानन्तरं सवनीयस्यैव प्रथममुपस्थितेः इतरयोस्तु पश्चात् तथा हि ज्योतिष्टोमे त्रयः पशुयागाः अग्नीषोमीयः स

वनीय आनुबंध्यश्चेतिते च भिन्नदेशाः अग्नीषोमीय औपवसथ्येह्नि सवनीयः सुत्याकाले आनुबंध्यस्त्वंते साद्यस्क्रो नाम सोमयागविशेषः स्वा
व्यक्तत्वात् ज्योतिष्टोमविकारः अतस्ते त्रयोपि पशुयागाः साद्यस्के वा एक प्राप्ताः तेषांच तत्र साहित्यं श्रुतं सह पशूनालभेत इति· तत्र साहि
त्यं सवनीयदेशे तस्य प्रधानप्रत्यासत्तेः स्थानातिक्रमसाम्याच्च सवनीयदेशेह्यनुष्ठाने क्रियमाणेग्नीषोमीयानुबंध्ययोः स्वस्वस्थानातिक्रम
मात्रं भवति अग्नीषोमीयदेशेत्वनुष्ठाने सवनीयस्य स्वस्थानातिक्रममात्रं आनुबंध्यस्यतु स्वस्थानातिक्रमः सवनीयस्थानातिक्रमश्चस्या
त्· एवमानुबंध्यदेशेग्नीषोमीयस्य द्रष्टव्यः तथाच सवनीयदेशे सर्वेषामनुष्ठाने कर्तव्ये सवनीयस्य प्रथममनुष्ठानं आश्विनग्रहग्रहणानंत
रं हि सवनीयदेशः प्रकृतौ आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति इत्याश्विनग्रहणानंतरं तस्य विहित
त्वात् तथाच साद्यस्केप्याश्विनग्रहणे कृते सवनीय एवोपस्थितो भवति इति युक्तं तस्य स्थानात्प्रथममनुष्ठानं इतरयोस्तु पश्चादित्युक्तं प्रधा
नक्रमेणांगानां क्रम आश्रीयते मुख्यक्रमः येन क्रमेण प्रधानानि क्रियंते तेनैव क्रमेण तेषामंगान्यनुष्ठीयंते तदा सर्वेषामंगानां स्वैः प्रधा
नैस्तुल्यं व्यवधानं भवति व्युत्क्रमेण त्वनुष्ठाने केषांचिदंगानां स्वैः प्रधानैरत्यंतमव्यवधानमन्येषामत्यंतव्यवधानं स्यात्· तच्चायुक्तं प्रयोगविध्यव
गतसाहित्यबाधापत्तेः अतः प्रधानक्रमोप्यंगक्रमे हेतुः अत एव प्रयाजशेषेण आदौ आग्नेयहविषोभिधारणं पश्चादैंद्रस्य दध्नः आग्नेययागै
न्द्रयागयोः पौर्वापर्यात् अत्र हि द्वयोरभिधारणयोस्स्वस्वेन प्रधानेन तुल्यमेकांतरितव्यवधानं भवति आग्नेयहविरभिधारणाग्नेययागयो
रैन्द्रयागहविरभिधारणेन व्यवधानात् ऐन्द्रयागहविरभिधारणैन्द्रयागयोश्चाग्नेययागेन व्यवधानात् अतश्चादावाग्नेयहविरभिधार रामः
णं तत ऐन्द्रस्य हविषः तत आग्नेययागः ततश्चैन्द्रो यागः इत्येवं क्रमो मुख्यक्रमात्सिद्धो भवति· यदि त्वादावैन्द्रहविषोभिधारणं तत आग्नेय १९

७ तत आग्नेयानुष्ठानं ततः सान्नाय्यानुष्ठानं

स्रौक्रियते तदा याज्यानुवाक्याक्रमवशादादावाग्नेयस्यानुष्ठानादाग्नेययागतदंगहविरभिधा— रणयोरत्यंतमव्यवधानमैन्द्रयागतदंगह
विरभिधारणयोस्त्वत्यंतव्यवधानं तच्चानयुक्तं अतो युक्तः प्रयाजशेषाभिधारणस्य मुख्यक्रमात्क्रम इति सचायं मुख्यक्रमः पाठक्रमाद्दुर्ब
लः मुख्यक्रमो हि प्रमाणांतरसापेक्षप्रधानक्रमप्रतिपत्तिसापेक्षतया विलंबितप्रतिपत्तिकः पाठक्रमस्तु निरपेक्षस्वाध्यायपाठक्रममात्रा
पेक्षतया न तथेति बलवान् अत एवाग्नेयोपांशुयाजाग्नीषोमीयानां क्रमेणानुष्ठीयमानानामप्युपांशुयाज्याज्यनिर्वापयोर्मुख्यक्रमान्न पूर्वमनु
ष्ठीयते तस्य दुर्बलत्वात् पाठक्रमात्तु पश्चादनुष्ठीयते तस्य प्रबलत्वात् इति सचायं मुख्यक्रमः ——— प्रवृत्तिक्रमाद्बलवान् प्रवृत्तिक्र
मेष्ट्याश्रीयमाणे बहूनामंगानां प्रधानविप्रकर्षो भवति अस्मिंस्त्वाश्रीयमाणे सन्निकर्षः तद्यथा दर्शपूर्णमासयोरादावाग्नेयानुष्ठानं ततः सा
न्नाय्यस्य तद्धर्माश्च केचित्पूर्वमनुष्ठीयंते तत्र यदि प्रवृत्तिक्रममाश्रित्य तद्धर्माः सर्वे पूर्वमनुष्ठीयेरन् तत आग्नेयधर्माः तदा तद्धर्माणां स्वप्रधा
नेन सह द्वाभ्यामाग्नेयधर्मैस्तदनुष्ठानाभ्यां विप्रकर्षः स्यात् यदा तु सान्नाय्यधर्माणां केषांचित्पूर्वमनुष्ठानेपि अन्ये सर्वे मुख्यक्रममाश्रित्याग्ने
यधर्मानुष्ठानानंतरमनुष्ठीयंते तदा सर्वेषामाग्नेयधर्मसान्नाय्यधर्माणामेकैकेन विजातीयेनाव्यवधानं भवन्ति आग्नेयधर्माणां स्वप्रधानेन
सह सान्नाय्यधर्मैर्व्यवधानात् सांनाय्यधर्माणां स्वस्वप्रधानेन सहाग्नेयानुष्ठानेन व्यवधानादिति न विप्रकर्षः तस्मान्मुख्यक्रमः प्रवृत्तिक्रमाद्ब
लवान् सह प्रयुज्यमानेषु प्रधानेषु सन्निपातितानामंगानामावृत्त्यानुष्ठाने कर्तव्ये द्वितीयादिपदार्थानां प्रथमानुष्ठितपदार्थक्रमाद्यः क्रमः स प्रवृ
त्तिक्रमः यथा प्राजापत्यांगेषु प्राजापत्या हि वैश्वदेवीं कृत्वा प्राजापत्यैश्चरंतीति वाक्येन तृतीयानिर्देशात् सेतिकर्तव्यताका एककाले न विहि
ताः अतस्तेषां तदंगानां चोपकरणानियोजनप्रभृतीनां साहित्यं संपाद्यं तत्र प्राजापत्यानां संप्रतिपन्नदेवताकत्वेनैकस्मिन्कालेनुष्ठानादुपप

न्या·मी यतेसाहित्यं तदंगानां नैकस्मिन्कालेनुष्ठानमशक्यं नह्यनेकेषां पशूनामुपाकरणमेकस्मिन्काले कर्तुं शक्यं अतस्तेषां साहित्यं अव्यवधाने
२० नानुष्ठानात्संपाद्यं एकस्योपाकरणं कृत्वापरस्योपाकरणमिति अतः प्राजापत्येष्वेकं पदार्थं सर्वेष्वनुष्ठाय द्वितीयः पदार्थोनुष्ठेयः तत्र प्रथ
मपदार्थानुष्ठानं कस्मिंश्चित्पशावारभ्य कर्तव्यं द्वितीयस्तु पदार्थो येन क्रमेण प्रथमोनुष्ठितस्तेनैव क्रमेणानुष्ठेयः प्रयोगविध्यवगतस्य मिथोंगसाहि
त्योपपत्ते प्रयोगविधिना हि दैक्षे तदंगानामुपाकरणनियोजनादीनां मिथः साहित्यमानंतर्यापरपर्यायं विहितं तच्च साहित्यं सवनीयपशौ चो
दकेन प्राप्तं तस्य प्राणिद्रव्यकत्वेन दैक्षविकृतित्वात् सवनीयाश्च एकादशिनीषु प्राप्तं सुत्याकालत्वसामान्यात् तेभ्यश्च प्राजापत्ये
षु प्राप्तं गुणत्वसामान्यात् प्राजापत्येषु च प्रतिपश्वयागभेदाच्चोदकाभिद्यते अतश्चोदकात्तत्तत्पश्वंगभूतानां उपाकरणनियोजनादीनां
साहित्यमानंतर्यापरपर्यायं प्राप्तं अत एवैकस्य पशोरुपाकरणानंतरमेव नियोजनं चोदकबलात् कर्तव्यत्वेन प्राप्तं तच्च न क्रियते प्रत्यक्षव
चनावगतसर्वपश्वंगसाहित्यानुपपत्तेः अत एकस्मिन्पशौ उपाकरणे कृते तदनंतरमेव कर्तव्यत्वेन प्राप्तमपि नियोजनं न क्रियते प्रत्यक्ष
वचनबलात्तु पश्वंतरेषु षोडशसु उपाकरणमेव क्रियते कृते तु तेषु उपाकरणे प्रथमपशोर्नियोजनस्य तद्वितीयोपाकरणेन व्यवधाने प्रमा
णाभावात् प्रथमपशावेव नियोजनं कार्यं अतश्च येन क्रमेणोपाकरणं कृतं तेनैव क्रमेण नियोजनं कार्यं एवं च तत्तत्पशूपाकरणानां
स्वस्वनियोजनैस्तुल्यं षोडशक्षणैर्व्यवधानं भवति अन्यथा केषांचिद्दूरत्वं तद्व्यवधानं केषांचिदव्यवधानं स्यात् तच्च न युक्तं तस्माद्येन क्रमे
ण प्रथमः पदार्थोनुष्ठितस्तेनैव द्वितीयोनुष्ठेयः तत्सिद्धं प्रथमानुष्ठितपदार्थक्रमाद्यो द्वितीयपदार्थक्रमः स प्रवृत्तिक्रम इति तदेवं निरूपि एमः
तः षड्विधक्रमनिरूपणेन प्रयोगविधिव्यापारः फलस्वाम्यबोधको विधिरधिकारविधिः फलस्वाम्यं च कर्मजन्यफलभोक्तृत्वं स च यजेतस्व २०
संक्षेपतः १

र्गकाम इत्येवंरूपः अनेन हि स्वर्गमुद्दिश्य यागं विदध तास्वर्गकामस्य यागजन्यफलभोक्तृत्वं प्रतिपाद्यते यस्याहिताग्नेर् ग्निर्गृहान्दहेत्सोग्नयेक्षा
मवते पुरोडाशमष्टाकपालं निर्वपेदित्यादि भिस्त्वग्निदाहादौ निमित्ते कर्म विदधद्भिर्निमित्तवतः कर्मजन्यपापक्षयरूपफलस्वाम्यं प्रतिपाद्यते तच्च फल
स्वाम्यं तस्यैव यो धिकारि विशेषणविशिष्टः अधिकारिविशेषणं च तद्देव यत्पुरुषविशेषणत्वेन श्रुतं अत एव राजा राजसूयेन स्वाराज्य
कामो यजेतेत्यनेन स्वाराज्यमुद्दिश्य राजसूयं विदधतापि न स्वाराज्यकाममात्रस्य तत्फलभोक्तृत्वं प्रतिपाद्यते किंतु राज्ञः सतस्तत्कामस्य किं
चित्पुरुषविशेषणत्वेनाश्रुतमप्य धिकारिविशेषणं भवति यथाध्ययनविधिसिद्धा विद्या ग्निसाध्येषु च कर्मसु आधानसिद्धाग्निमत्तासाम
र्थ्यं च एतेषां पुरुषविशेषणत्वेनाश्रवणेपि अधिकारिविशेषणत्वमस्त्येव उत्तरक्रमविधीनां ज्ञानाक्षेपाशक्तेरभावेन अध्ययनविधि
सिद्धज्ञानवंतं प्रत्येव प्रवृत्तेः अत एव शूद्रस्य न यागादावधिकारः तस्याध्ययनविधिसिद्धज्ञानाभावात् आधानविधिसिद्धाग्निअभावाच्च
अध्ययनस्योपनीताधिकारत्वात् उपनयनस्य चाष्टवर्षं ब्राह्मणमुपनयीतेत्यादिना त्रैवर्णिकाधिकारित्वात् तथाधानस्यापि वसंते ब्राह्मणो
ग्नीनादधीतेत्यादिना त्रैवर्णिकाधिकारित्वात् यद्यपि वर्षासु रथकारोग्नीनादधीतेत्यनेन रथकारस्य सौधन्वन अपरपर्यायस्याधानं विहितं ये
गाद्दर्शपूर्णमासावेव लोपस्त्वात् तथापि न तस्योत्तरकर्मस्वधिकारः अध्ययनविधिसिद्धज्ञानाभावात् न च तदभावे आधानेपि कथमधिकारः तदनुष्ठानस्य
तत्साध्यत्वादिति वाच्यं तस्याध्ययनविधिसिद्धज्ञानाभावेपि वर्षासु रथकारोग्नीनादधीतेत्यनेनैव विधिना धानमात्रोपयिकज्ञानापेक्षणात्
अन्यथा तस्यैव विधानानुपपत्तेः अतश्च रथकारस्याधानमात्रेधिकारेपि नोत्तरकर्मस्वधिकारो विद्याभावात् एवं च तदाधानं नाग्निसंस्कारार्थं
संस्कृतानामग्नीनामुत्तरत्रोपयोगाभावात् किंतु तदाधानं लौकिकाग्निगुणकं विघ्नजिन्न्यायेन स्वर्गफलं च स्वतंत्रमेव प्रधानकर्म विधीयते अ
अग्निसाध्यकर्मणा चानपेक्षत्वेन तद्विधीनामाधानसिद्धाग्निमंतं प्रत्येव प्रवृत्तेः ॥७॥

ग्नीनिति चदितीपासक्तून जुहोतीतिवत्तृतीयार्थी इतिप्रकृतमनुसराम: तत्सिद्धं शूद्रस्याध्ययनविधिसिद्धज्ञानाभावादाधानसिद्धाग्न्यभा
वाच्चनोत्तरकर्मस्वधिकार इति नन्वेवं स्त्रिया अधिकारो न स्यात् तस्या अध्ययनप्रतिषेधेन तद्विधिसिद्धज्ञा—नाभावात् न च नास्त्येवेति वा
च्यं यजेत स्वर्गकाम इत्यादौ स्वर्गकामपदस्योद्देश्यसमर्पकत्वेन पुंस्त्वस्योद्देश्यविशेषणत्वात् ग्रहैकत्ववदविवक्षितत्वेन स्त्रिया अधिकार
स्यासाध्यत्वादिति चेन्नैवं अधिकार: साधितो न तु स्वातंत्र्येण न स्त्री स्वातंत्र्यमर्हतीत्यादिना तस्य निषिद्धत्वात् स्वातंत्र्येण कर्तृत्वे प्रयोगद्व
यस्यापि वैगुण्यापत्तेश्च यजमानप्रयोगे पत्नीकर्तृकाज्यावेक्षणादिलोपात् पत्नीप्रयोगे च यजमानकर्तृकाज्यावेक्षणादिलोपात् अ
तो दंपत्यो: सहाधिकार: ——— सहाधिकारत्वे च यजमानविद्ययैव पत्न्या अपि कार्यसिद्धेर्न ज्ञानं विना तस्या अधिकारानुपपत्ति: पा
णिग्रहणात्तु सहत्वं सर्वकर्मसु तथा पुण्यफलेष्विति वचनेन स्त्रिया अधिकारनिर्णयाच्च निषादस्थपतेरिवाध्ययनविधिसिद्धज्ञानविर
हिणोपि एतया निषादस्थपतिं याजयेदिति वचनान्निषादेष्ट्यां निषादस्थपतिशब्दे हि निषादश्चासौ स्थपतिश्चेति कर्मधारयो न तु निषादानां
स्थपतिरिति षष्ठीतत्पुरुष: षष्ठ्यर्थे लक्षणापत्ते: एतावांस्तु विशेष: निषादस्याध्ययनविधिसिद्धज्ञानाभावे नैतस्यैव विधेस्तत्कर्मोपयिक
ज्ञानाक्षेपकत्वं पत्न्यास्तु तादृशज्ञानाभावेपि यजमानेन सहाधिकारात्तस्य च तादृशज्ञानवत्त्वात्तेनैव च तस्या: कार्यसिद्धेर्नोत्तरक्रतुविधीनां
ज्ञानाक्षेपकत्वे यत्तु पत्नीमात्रकर्तृका: पदार्था: आज्यावेक्षणादयस्ते ज्ञानं विना शक्यानुष्ठाना इति तद्विधीनां तदाक्षेपकत्वं स्वीक्रियत इति त
त्सिद्धं अध्ययनविधिसिद्धज्ञानस्याधानविधिसिद्धाग्निमत्तायाश्चोत्तरकालकर्मस्वधिकारिविशेषणत्वमिति एवं सामर्थ्यस्याप्यधिकारिविशे
षणत्वं असमर्थं प्रति विध्यप्रवृत्ते: आख्यातानामर्थं ब्रुवतां शक्ति: सहकारिणीति न्यायात् तच्च सामर्थ्यं काम्यकर्मणि अंगप्रधानविषयं नित्ये

गासमर्थः प्रधानमात्रसमर्थश्च काम्येधिकारी प्रधानविधेरंगविध्येकवाक्यतापन्नस्य सांगकर्मसमर्थं प्रत्येव प्रवृत्तेः यथाविनियोगमधिका
रात्· यदि हि समर्थं प्रति हि कयाचित् श्रुत्या विरोधः स्यात्· तदा असमर्थस्याप्यधिकारः स्यात्· न च विरोधोस्ति स्वर्गकामश्रुतेः समर्थं प्रति प्रवृ
त्तौ विरोधाभावात्· प्रत्युतासमर्थं प्रति प्रवृत्तौ प्रधानविधेरंगवाक्यैकवाक्य तया प्रतिपन्नस्यांगसाहित्यस्य बाधापत्तेः नित्यवत् श्रुतानामं
गानां पाक्षिकत्वप्रसंगाच्च· अतः सांगे प्रयोगे समर्थस्यैव काम्यकर्मण्यधिकारः नित्यकर्मणां त्वंगेषु यथाशक्तिन्यायः तानि हि यावज्जीवश्रुत्या याव
ज्जीवं कर्तव्यत्वेन चोदितानि न च यावज्जीवं केनापि सांगः प्रयोगः कर्तुं शक्यते अतो नित्यकर्मसु प्रधानमात्रसमर्थोधिकारी· अंगानि तु यावंति
कर्तुं शक्यंते तावंति कार्याणीति आस्तां बहूक्त्या सूरिभिः पुराक्रांतत्वात्· तत्सिद्धफलस्वाम्यबोधको विधिरधिकारविधिरिति· तदेवं निरूपि
तं चतुर्विधभेदनिरूपणेन विधेः प्रयोजनवदर्थपर्यवसानं मन्त्राणां च प्रयोगसमवेतार्थस्मारकतयार्थवत्वं न तु तदुच्चारणमदृष्टार्थं· दृष्टे
संभवति अदृष्टस्यान्याय्यत्वात्· न च दृष्टस्य प्रकारांतरेणापि संभवान्मंत्राम्नानमनर्थकं मंत्रैरेव स्मर्तव्यमिति नियमविधिश्रवणात्· साधन
द्वयस्य पक्षप्राप्तौ अन्यतरस्य साधनस्याप्राप्ततादशायां यो विधिः स नियमविधिः यथाहुः विधिरत्यंतमप्राप्तौ नियमः पाक्षिके सति· तत्र चान्य
त्र च प्राप्तौ परिसंख्येति गीयते· अस्यार्थः यस्य यदर्थत्वं प्रमाणांतरेणाप्राप्तं तस्य तदर्थत्वेन यो विधिः स अपूर्वविधिः यथा यजेत स्वर्गकाम इ
त्यादि यागस्य हि स्वर्गार्थत्वं न प्रमाणांतरेण ज्ञायते किं त्वनेनैव विधिनेति भवत्ययमपूर्वविधिः पक्षे प्राप्तस्य तु यो विधिः स नियमविधिः यथा व्री
हीनवहन्यादित्यादिः अनेन हि विधिनावघातस्य न वैतुष्यार्थत्वं बोध्यते· अन्वयव्यतिरेकसिद्धत्वात् किंतु नियमः स चाप्राप्तांशपूरणं वैतुष्य
स्य हि नानोपायसाध्यत्वात्· यस्यां दशायां अवघातं परित्यज्योपायांतरं ग्रहीतुमारभ्यते तस्यां दशायां अवघातस्याप्राप्तत्वेन तद्विधानात्मकं

 अप्राप्तांशपूरणमेवानेन विधिना क्रियते· अतश्च नियमविधौ अप्राप्तांशपूरणात्मको नियम एव वाक्यार्थः पक्षे अप्राप्ततादशायां अवघातविधा
 नमितियावत् न तु अपूर्ववविधाविवात्यंताप्राप्तौ यागविधानमिति· उभयस्य युगपत्प्राप्तावितरव्यावृत्तिको विधिः परिसंख्याविधिः यथा पंच पंच
नखा भक्ष्या इति इदं हि वाक्यं न भक्षणविधिपरं तस्य रागतः प्राप्तत्वात्· नापि नियमपरं पंचनखापंचनखभक्षणयोर्युगपत्प्राप्तेः पक्षे प्राप्त्यभावा
त्· अतइदं अपंचनखभक्षणनिवृत्तिपरमिति भवति परिसंख्याविधिः सा च परिसंख्या द्विविधाः श्रौती लाक्षणिकी चेति· तत्रात्रैवावपंतीत्यत्र
श्रौती परिसंख्या एवकारेणावमानातिरिक्तस्यान्यव्यावृत्तेरभिधानात्· पंच पंचनखा भक्ष्या इत्यत्र तु लाक्षणिकी इतरनिवृत्तिवाचकपदस्याभा
वात्· अत एवैषा त्रिदोषा त्रिदोषग्रस्ता· दोषत्रयं च· श्रुतहानि रश्रुतकल्पना· प्राप्तबाधश्चेति· श्रुतस्य पंचनखभक्षणस्य हानात्· अश्रुतापं
चनखभक्षणनिवृत्तिकल्पनात्· प्राप्तस्य वा पंचनखभक्षणस्य बाधनात् इति· अस्मिंश्च दोषत्रये दोषद्वयं शब्दनिष्ठं प्राप्तबाधश्च दोषोऽर्थनि
ष्ठ इति दिक् तत्सिद्धं मंत्रैरेव स्मर्तव्यमिति नियमविध्याश्रयणान्न मंत्राम्नानमनर्थकं· अतश्च प्रयुक्तमंत्राणां प्रयोगसमवेतार्थस्मारकतयार्थवत्त्वं
तत्र ये मंत्रा यत्र यत्र पठितास्तेषां तत्र यद्यर्थप्रकाशनं प्रयोजनं संभवति तदा तत्रैव विनियोगः येषां तु न संभवति तेषां यत्र संभवति तत्रोत्कर्षः य
था पूषानुमंत्रणमंत्राणामिति· येषां क्वापि न संभवति तदुच्चारणस्य त्वगत्या दृष्टार्थत्वं सर्वथापि तु तेषां नानर्थक्यमिति·॥ ——
——॥ नामधेयानां विधेयार्थपरिच्छेदकतयार्थवत्त्वं· तथा हि उद्भिदा यजेत पशुकाम इत्यत्र हि उद्भिच्छब्दो यागनामधेयं तेन च विधेयार्थपरि
च्छेदः क्रियते अनेन हि वाक्येनाप्राप्तत्वात्फलोद्देशेन यागो विधीयते यागसामान्यस्य चाविधेयत्वाद्यागविशेष एव विधीयते· तत्र कोसौ विशेष 
इत्यपेक्षायां उद्भिच्छब्दादुद्भिद्रूपो यो याग इति ज्ञायते उद्भिदा यागेनेति सामानाधिकरण्येन नामधेयान्वयात् तस्य च यजिना सामानाधिकरण्यं न 

वाचित्वेन विशेष ४

नीलोत्पलशब्दवत्· तत्र हि उत्पलशब्दार्थादुत्पलादन्यो नीलशब्दस्य वाच्योऽर्थोऽस्ति नीलगुणः लक्षणया तु नीलशब्दस्य द्रव्यपरत्वेन सामानाधि-
करण्यं उद्भिच्छब्दस्य तु यज्यवगतयाग विशेषान्नान्यो वाच्योऽर्थोऽस्ति विशेषवाचित्वात्तस्य अतश्चार्थान्तरवाचित्वाभावेन न नामधेयस्य नीलश-
ब्दवत्सामानाधिकरण्यं किन्तर्हि वैश्वदेव्यामिक्षेत्यत्रामिक्षाशब्दवत् वैश्वदेवीशब्दस्य हि देवतातद्धितान्तत्वात्तस्य च सास्य देवतेति सर्वनामार्थ-
स्मरणात्सर्वनाम्ना चोपस्थितविशेषपरत्वं· तत्र कोऽसौ वैश्वदेवीशब्दोपात्तो विशेष इत्यपेक्षायां आमिक्षायां आमिक्षापदसांनिध्यादामिक्षारू-
पो विशेष इत्यवगम्यते· यथाहुः आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः आमिक्षापदसान्निध्यात्तस्यैव विषयार्पणमिति तथा श्रुत्यैवोपपदस-
मानार्थः सर्वनाम्ना प्रतीयते तदर्थस्तद्धितेनैव त्रयाणामेकवाक्यतेति तस्माद्यथा वैश्वदेवीशब्दोपात्तविशेषसमर्पकत्वेनामिक्षापदस्य वैश्वदे-
वीशब्देन सामानाधिकरण्यं एवं सामान्यस्याविधेयत्वात् यज्यवगतयागविशेषसमर्पकत्वेन नामधेयस्य यजिना सामानाधिकरण्यं तत्सिद्धं
नामधेयानां विधेयार्थपरिच्छेदकतयार्थवत्वं· यथाहुः तदधीनत्वाद्यागविशेषसिद्धेरिति नामधेयत्वं च निमित्तचतुष्टयात् मत्वर्थलक्ष-
णाभयाद्वाक्यभेदभयात्तत्प्रख्यशास्त्रात्तद्व्यपदेशाच्चेति· तत्रोद्भिदा यजेत पशुकाम इत्यत्रोद्भिच्छब्दस्य यागनामधेयत्वं मत्वर्थलक्षणाभया-
त्· तथाहि उद्भिच्छब्दस्य गुणसमर्पकत्वे यागानुवादेन तावन्न गुणविधानं युज्यते फलपदानर्थक्यापत्तेः न चानेन वाक्येन फलंप्रतिया॥
गविधानं तस्मिंश्च गुणविधानं युज्यते वाक्यभेदापत्तेः नापि गुणफलसंबंधविधानं संभवति परपदार्थविधाने न विप्रकृष्टविधानापत्तेः· धा-
त्वर्थस्य स्वरूपेणाविधानात्· तदुद्देशेन वाऽन्यस्य कस्यचिदभिधानात्· धातोरसंतपारार्थ्यापत्तेश्च यज्ञानर्थक्यापत्तेश्च· न हि तदानेन क-
करणांसमर्प्यते गुणस्य करणत्वेनान्वयात्· नापि फलं पशोर्भाव्यत्वेनान्वयात्· अथ गुणफलसंबंधविधाने तु यागस्याश्रयत्वेन संबंध इति चे-

न· यजेतेत्यत्राश्रत्ववाचकपदाभावात्· अथसिद्धांतेकरणत्वमिवाश्रयत्वमपिलक्ष्यमितिचेन्न· आश्रत्वापेक्षयाकरणत्वस्यलघुत्वेनतल्लक्ष
णायाएवयुक्तत्वात्· फलायविधीयमानोगुणोयत्रकार———कतामापद्यतेस आश्रयः तत्वंचाश्रयत्वं करणत्वंचनिकृष्टाशक्तिरितिलाघवं· किं
चगुणफलसंबंधविधानेकरणीभूतोगुणस्तन्निष्ठंवा· करणत्वंचफलोद्देशेनविधेयं· तत्राद्यपक्षेकरणत्वस्यगुणोपसर्ज्जनत्वेनप्रतीतिर्ल्ल
क्षणयैववाच्यात्स्यत्तृतीयया प्रत्ययार्थत्वात्प्राधान्येनोपस्थितेः यदपि ——————— गुणनिष्ठंकरणत्वंफलोद्देशे
नविधेयं· तदापि फलभावनायाकरणत्वेनान्वययोग्यगुणनिष्ठ करणत्वोपस्थितिर्ल्लक्षणयैववाच्यात् तृतीयाभिहितस्यकरणत्वस्यक्रियान्व
ययोग्यस्यकरणत्वेनान्वयायोग्यत्वात्· करणशब्देनाभिहितं करणकारकत्वेनान्वययोग्यं· नतृतीयाभिहितं· करणशब्दवत्तृतीयोत्प
त्तिप्रसंगात्· अतश्चकरणत्वेनान्वययोग्यगुणनिष्ठकरणत्वोपस्थितिर्ल्लक्षणयैववाच्या लक्षणायाचोपस्थितकरणत्वस्यकरणीभूत
स्यवागुणस्ययत्फलभावनायांकरणत्वं तदपिलक्षणयैववाच्यं· श्रूयमाणतृतीययागुणमात्रस्ययागंप्रतिकरणत्वाभिधानात्· अतए
व तंत्ररत्नेचतुर्थ्यं करणीभूतगोदोहनादेः पश्वर्थसमभिव्याहारादित्युक्तं अतश्चगुणफलसंबंधविधानेधातोरत्यंतपरार्थ्यादिबहुदोषत्वादु
द्भिच्छब्दस्यगुणसमर्प्पकत्वेगुणविशिष्टकर्मविधानमेवस्वीकार्यं· तथासतिहियजिनालघुभूतंकरणत्वमात्रंलक्ष्यं· उद्भिच्छब्देनचप्रकृत्यंशे
नमत्वर्थमात्रंलक्ष्यमितिगुणफसंबंधविधानाल्लाघवंभवति· धातोरत्यंतपारार्थ्यादिकंतुनभवत्येवधात्वर्थस्यैवफलोद्देशेनविधानात्· अत
श्चोद्भिच्छब्दस्यगुणसमर्प्पकत्वेनमत्वर्थलक्षयित्वागुणविशिष्टंकर्मविधानंस्वीकार्यं उद्भिद्वतायागेनपशुंभावयेति· कर्मनामधेयत्वेतु उद्भिच्छब्द
स्यनमत्वर्थलक्षणामुख्यैववृत्त्यायजिसामानाधिकरण्येनतस्यान्वयसंभवात्· उद्भिदायागेनपशुंभावयेदितिसंभवतिचमुख्यार्थेलक्षणाआ

अपितु नयुक्ता संनिकृष्टविधानं तु समानमेव॰ नच्चैवं सोमेन यजेतेत्यत्रापि सोमपदस्य यागनामधेयत्वापातो गुणविधित्वे मत्वर्थलक्षणापत्ते
रिति वाच्यं सोमपदस्य लतायां रूढत्वेन यागनामधेयत्वानुपपत्तेरगत्या तदाश्रयणात् उद्भिच्छब्दस्य तु नैवं वाच्योर्थः कश्चित्प्रसिद्धः उद्भि
द्यतेनेनेति योगस्य तु गुणद्रव्ययागेपि फलोद्भेदनकारिणि उपपत्तेः तत्सिद्धम् उद्भिच्छब्दस्य मत्वर्थलक्षणाभयाद्यागनामधेयत्वं इति चित्र
या यजेत पशुकाम इत्यत्र चित्राशब्दस्य वाक्यभेदभयात्कर्मनामधेयत्वं तथाहि नस्तावदत्र गुणविशिष्टयागविधानं संभवति दधिमधुपयो
घृतं धाना उदकं तंडुलास्तत्संसृष्टं प्राजापत्यमित्यनेन विहितत्वाद्यागस्य विशिष्टविधानानुपपत्तेः प्राप्तस्य च यागस्य फलसंबंधे गुणसंबंधे च
विधीयमाने वाक्यभेदः अथ चित्राशब्दाच्चित्रत्वस्त्रीत्वयोः प्रतिपत्तेः स्त्रीत्वस्य च स्वभावतः प्राणिधर्मत्वात्प्रकृते दध्यादिद्रव्यके कर्मणि नि
वेशायोगात् नानेन वाक्येन प्रकृते कर्मणि गुणविधानं किंतु प्राणिद्रव्यके कर्मणि तत्रास्य वाक्यस्यानारभ्याधीतत्वात् अनारभ्याधीतानां च प्र
कृतौ वा हि रूढत्वादिति न्यायेन प्रकृतिगामित्वात्प्राणिद्रव्यकाणां च यागानां दैक्षस्य चेतरेष्विति न्यायेनाग्नीषोमीयप्रकृतिकत्वात् तदनुवा
देनानेन वाक्येन गुणो विधीयते दैक्षस्य च ज्योतिष्टोमांगत्वेन स्वतंत्रफलाकांक्षाया अभावात् न पशुकामपदं फलसमर्पकं किंत्वग्नीषोमी
यपश्वङ्गानुगतया प्राप्तकामनानुवादः तथा च न वाक्यभेद इति चेन्न तथापि दैक्षानुवादेन चित्रत्वस्त्रीत्वविधाने वाक्यभेदात् विशिष्ट
कारकविधानेपि गौरवलक्षणो वाक्यभेद एव कारकस्यापि प्राप्तत्वेन विशिष्टविधानानुपपत्तेश्च पशुकामपदस्यापि स्वरसतः फलप
रस्य कामनानुवादत्वे आनर्थक्यापत्तेश्च न च नियमतः पश्वङ्गेन कामना भवति कामनातः प्रागेव केनचिद्दत्तेनापि पशोस्तदभावा
त् तथा च पशुकामपदस्य नित्यवच्छ्रवणाबाधः दैक्षस्योत्पत्तिशिष्टपुंस्त्वावरुद्धत्वेन तत्र स्त्रीत्वविधानानुपपत्तेश्च आमिक्षायागानुवादेन वा

न्या·मी· जिनविधानवत् कृष्णसारं गोऽग्नीषोमीय इति विशेषविहितेन स्वसन्निधिपठितेन च कृष्णसारं गवर्णेनावरुद्धे चित्रत्वस्यानारभ्याधीतत्वेन सा
२४ मान्यशास्त्रेण विधानानुपपत्तेश्च पांचदश्यावरुद्ध इव साप्तदश्यविधानं अथमाभूदग्नीषोमीयपश्वनुवादेन चित्रत्वस्त्रीत्वविधानं सारस्वती
मेषीति वाक्यविहितयागांगमेष्यनुवादेन तु गुणविधानं स्यात् चित्रयेति स्त्रीकारकानुवादेन चित्रत्वमात्रविधानात् न च प्राकृतेन कृष्णसारं गवर्णे
नैराकांक्ष्यान्न चित्रत्वविधानं युक्तमिति वाच्यं उपदिष्टेन चित्रत्वेनातिदिष्टस्य वर्णांतरस्य बाधोपपत्तेरिति चेन्मैवं नहि चित्रयेत्येकेन पदे
न स्त्रीकारकस्योद्देशं कृत्वा चित्रत्वस्य विधानं संभवति एकप्रसरताभंगलक्षणवाक्यभेदापत्तेः उद्देश्यविधेयभावस्यानेकपदसाध्यत्वात् अ
त एव वषट्कर्तुः प्रथमभक्ष इत्यत्र विशिष्टभक्षस्य विधिर्न तु भक्षस्यानुवादेन प्राथम्यविधिरिति उक्तं तृतीये एष्यनुवादेन चित्रत्वविधाने फलपदान
र्थक्यापत्तेश्च उभयविधाने वाक्यभेदात् प्रकृतस्य च यागस्य फलाकांक्षाया अनिवृत्तेः विश्वजिन्न्यायेन फलकल्पने गौरवं मधुदध्निस्यादु
त्पत्तिवाक्येन एतस्याधिकारवाक्यस्य प्रतिपन्नैकवाक्यताबाधेन वाक्यभेदप्रसंगाच्च चित्राशब्दस्य कर्मनामधेयत्वे तु प्रकृतस्य कर्मणः फला
कांक्षस्य फलसंबंधमात्रकरणान्न वाक्यभेदः प्रकृताया इष्टेरनेकद्रव्यत्वेन चित्राशब्दस्य तत्रोपपत्तेः तस्माद्वाक्यभेदभयाच्चित्राशब्दः कर्म
नामधेयमिति। अग्निहोत्रं जुहोतीत्यत्राग्निहोत्रशब्दस्य कर्मनामधेयत्वं तत्प्रख्यशास्त्रात् तस्य गुणस्य प्रख्यापकस्य प्रापकस्य शास्त्रस्य विद्य
मानत्वेनाग्निहोत्रशब्दः कर्मनामधेयमिति यावत् तथाहि विधिना तावद्देव विधेयं यत्स्वकारांतरेणाप्राप्तं अप्राप्ते शास्त्रमर्थवदिति न्यायादग्नि
होत्रशब्दस्य च गुणविधित्वे यो गुणस्तेन विधेयं स शास्त्रांतरेणाप्राप्तः कथमिति चेच्छृणु यदि तावदग्नौ होत्रमस्मिन्निति सप्तमीसमासमाश्रित्य होमाधा रामः
रत्वेनाग्निर्विधेय इत्युच्यते तदा यदाहवनीये जुहोतीत्यनेनैव प्राप्तत्वाद्विध्यानर्थक्यं अथाग्नये होत्रमस्मिन्निति चतुर्थीसमासमाश्रित्याग्निरु २४

पादेवतानेनसमर्प्यत इतिचेन्न शास्त्रांतरेणाप्राप्तत्वात् किंतच्छास्त्रांतरमितिचेत् अत्रकेचित् यदग्नयेचप्रजापतयेचसायंजुहोतीति शास्त्रां
तरेणहोमानुवादेनाग्निप्रजापत्योर्विधानात् अग्निहोत्रपदं देवतासमर्पकंनचोभयविधानेवाक्यभेदः परस्परनिरपेक्षविधानेहिवाक्यभेदःस्या
त् अग्नयेजुहोतिप्रजापतयेजुहोतीतिप्रत्येकंविधिव्यापारात् चशब्दश्रवणात्तुपरस्परसापेक्षस्यैवपदद्वयस्याख्यातान्वयात्नवाक्यभेदः अ
तएवऋत्विग्भ्योदक्षिणांददातीतिवाक्यविहितदक्षिणानुवादेनगौश्चाश्वश्चाश्वतरश्चगर्दभश्चाजाश्चावयश्चयवाश्चतिलाश्चमाषाश्चतस्यद्वादशश
तंदक्षिणेतिवाक्येनगवादीनांविधानंदशमोक्तंसंगच्छतेपरस्परसापेक्षाणांगवादीनांविधानेनवाक्यभेदाभावात् अन्यथादक्षिणानुवादेना
नेकेषांगवादीनांविधानंनैवसंगच्छते अग्निप्रजापत्योश्चदेवतयोःसतोःसमुच्चयोनतुसमुच्चितयोर्देवतात्वंपृथक्कारकविभक्तिश्रवणात् च
कारार्थस्यविभक्त्यार्थेनान्वयात् तस्याःप्रधान्यात् अतश्चनाग्निषोमादिवदग्निप्रजापत्योर्देवतयोर्देवतात्वमिति अन्येत्वाचार्या आहुः अग्नयेच
प्रजापतयेचसायंजुहोतीतिवाक्यंनाग्नेःप्रापकंहोमानुवादेनप्रजापतिमात्रविधानात् नचविनिगमनाविरहादुभयविधानंयुक्तमितिवाच्यं
विधिनाहितदेवविधीयतेयत्प्रकारांतरेणाप्राप्तंतत्रयथानेनवचनेन – सायंकालोनविधीयतेसायंजुहोतीतिवचनांतरेणप्राप्तत्वात् तथा
ग्निरपिनविधीयते अग्निर्ज्योतिरग्निःस्वाहेतिमंत्रवर्णादेवप्राप्तत्वात् मंत्रवर्णस्यापिदेवतासमर्पकत्वमस्त्येव अतएवोपांशुयाजेविष्ण्वा
दीनांमांत्रवर्णिकंदेवतात्वमित्युक्तं नन्वेवंप्रजापतिदेवतयाग्नेर्बाधःस्यात् चतुर्थ्याहिप्रजापतेर्देवतात्वमवगम्यते अग्नेस्तुमंत्रवर्णिकं
तत्रसास्यदेवतेतिदेवतात्वेतद्धितस्मरणवत् यद्यपिदेवतात्वेचतुर्थी – स्मरणंनास्तिसंप्रदानेचतुर्थीतिसंप्रदानेतस्याःस्मरणात् तथापि
त्यज्यमानद्रव्योद्देश्यत्वंतावद्देवतात्वंतच्चसंप्रदानस्वरूपांतर्गतंत्यज्यमानद्रव्योद्देश्यत्वेसतिप्रतिग्रहीतृत्वस्यसंप्रदानत्वात् अतश्चतुर्थी

स्वा॰मी॰ तः संप्रदानैकदेशतया देवतात्वप्रतीतिरस्त्येवमंत्रवर्णात्तु न देवतात्वं प्रतीयते किंत्वधिष्ठानमात्रं अतश्च मंत्रवर्णश्चतुर्थीतो दुर्बलः यथा।
२५ हुः तद्धितेन चतुर्थ्या वा मंत्रवर्णेन वा पुनः देवताया विधिस्तत्र दुर्बलं तु परंपरमिति अतश्च प्रबलप्रमाणावोधितप्रजापतिदेवतया दुर्बलप्र
माणावोधिताग्नेर्वाधः स्यादिति चेत्सत्यं स्याद्बाधो यदि प्रजापतये जुहोतीति केवलं प्रजापतिविधानं स्यात् विधीयमानस्तु प्रजापतिर्मंत्रवर्ण
प्राप्तमग्निमनूद्य तत्समुच्चितो होमोद्देशेन विधीयते समुच्चितोभयविधानापेक्षयान्यतः प्राप्तमग्निमनूद्य तत्समुच्चितप्रजापतिमात्रविधाने ला
घवात् अतश्च न बाधकत्वं निरपेक्षविधानाभावात् यथा च त्वन्मतेऽग्निप्रजापत्योर्होमोद्देशेन विधानात्तुल्यार्थत्वेन विकल्पे प्रसक्ते प्रजापते
र्नपाक्षिकमग्निबाधकत्वं समुच्चयविधानात् एवं मंत्रवर्णप्राप्तमग्निमनूद्य तत्समुच्चितप्रजापतिविधानेपि न बाधकत्वमिति तुल्यं यत्तु अग्ने
र्मांत्रवर्णिकत्वे अग्निर्ज्योतिः सूर्यः स्वाहेति मिश्रलिंगमंत्रवर्णाबलात्सायंहोमस्य द्विदैवत्यत्वापत्तिरिति तन्न अग्निसमुच्चितप्रजापतिविधा
नवत्सूर्यसमुच्चितस्याविधानात्प्रबलं चतुर्थीप्रमाणावोधितेन प्रजापतिना मंत्रवर्णप्राप्तस्य सूर्यस्य बाधितत्वात् यत्वग्नेर्मांत्रवर्णिकत्वे प्रजा
पतिविधेरेतेनैव वाक्येन सिद्धेर्यदग्नये च प्रजापतये च सायं जुहोति यत्सूर्याय च प्रजापतये च प्रातर्जुहोति इति वाक्यद्वयं व्यर्थमिति तन्न भवे।
द्व्यर्थं यदि प्रजापतिमात्रविधानं विवक्षितं स्यात् सायंहोमे अग्नि—सुचितप्रजापतिविधानं प्रातर्होमे सूर्योज्योतिर्ज्योतिः सूर्यः स्वाहेति मंत्रव
र्णप्राप्तसूर्यसमुच्चितप्रजापतिविधानं च विवक्षितं न चैतदेकेन वाक्येन सिद्ध्यति अतोर्थवद्वाक्यद्वयं यत्वग्नेर्मांत्रवर्णिकत्वे मंत्रवर्णस्याग्नि।
ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोतीति वाक्येन सायंहोमे विनियुक्तत्वात् तस्मकाश्यस्याग्नेरपि प्रजापतिसमुच्चितस्य तत्रैव देवतात्वे वग रामः
ते यदग्नये चेति वाक्ये सायंशब्दो व्यर्थ इति एवं यत्सूर्याय चेति वाक्ये प्रातः शब्दोपि व्यर्थ इति किं च मंत्रवर्णे न ज्योतिष्टूगुणविशिष्टस्याग्ने प्र। २५

काशनाद्विशिष्टस्यैव देवतात्वापातश्च इति तं दूषित· होमानुवादेन देवताद्वयविधानेपि मंत्रवर्णयोर्लिंगाद्देवप्राप्तिसंभवात् तद्विध्यानर्थक्यात्
मिश्रलिंगमंत्रविधिपर्युदस्तयोः प्रतिप्रसवार्थं विधानेपि तद्विधिगतयोः सायंप्रातःशब्दयोरानर्थक्यं विधीयमानयोर्मंत्रयोर्व्यवस्थयैव
प्राप्तिसंभवात्· तत्प्रकाश्ययोर्देवतयोर्व्यवस्थितत्वात्· अनुवादत्वोक्तिस्तु उभयत्रतुल्या इति मांत्रवर्णिकत्वेपि अग्नेः केवलस्यैव देवतात्वं
नगुणविशिष्टस्य यदग्नये चेति वाक्येग्नेः पूर्वाहुतिरित्यत्र च केवलस्यैव देवतात्वावगतेः यथा ह्युपांशुयागे विष्णादेर्मांत्रवर्णिकत्वेपि नगुणवि
शिष्टस्य देवतात्वं विष्णुरुपांश्वयष्टव्य इत्यर्थवादे केवलस्यैव संकीर्तनात् तद्वदिति अतश्च मांत्रवर्णिकत्वे दोषाभावाद्देवताद्वयविधाने च गौ
रवापत्तेरन्यतः प्राप्तमग्निमनूद्य समुच्चितः प्रजापतिरेवात्र विधीयते होमानुवादेनोभयविधाने वाक्यभेदप्रसंगाच्च· न च चकारश्रवणान्न
वाक्यभेद इति वाच्यं· चकारार्थो हि समुच्चयः तं च समुच्चयं यदि चकारः प्राधान्येन ब्रूयात्तदा प्रधानस्यानेकविशेषणसंग्राहकत्वाद्रुणादिविशि
ष्टरूपविधानइव कारकद्वयसमुच्चयविधाने वाक्यभेदो न भवेत्· न च चकारः समुच्चयं प्राधान्येन ब्रूते परोपसर्जनत्वेनैवाभिधानात्· अतएव
दशमे भाष्यकारैश्चकारस्य समुच्चयशब्दाद्वैलक्षण्यं प्रतिपादितं समुच्चयशब्दो हि तं प्राधान्येन ब्रूते न चकारः यदि प्राधान्येन ब्रूयात्तदा त
त्प्रतिपन्नः समुच्चयः क्रियागुणैः संबध्येत समुच्चयः शोभनः समुच्चयो द्रष्टव्य इतिवत् शोभनश्च द्रष्टव्य इति प्रयोगः स्यात् समुच्चयशब्दवच्च
कारस्य प्राधान्येन समुच्चयवाचित्वे धवखदिरयोः समुच्चय इतिवत् धवखदिरयोश्चेत्यपि प्रयोगः स्यादिति अतश्चकारः समुच्चयं न प्राधान्येन
ब्रूते येन प्रधानस्यैव विधानान्न वाक्यभेदो भवेत्· किंतु कारकद्वयोपसर्जनत्वेनैव सतं ब्रूते· समुच्चितावग्निप्रजापती इति प्रधानद्वयविधाने च वा
क्यभेदः स्यादेव· यथा ग्रहाद्देशे संमार्गैकत्वविधाने यद्यपि चकारः समुच्चयं प्राधान्येन ब्रूयात्तथापि तस्य कारकद्वयं प्रति प्राधान्यमनुपपन्नं· वि

भा·मी· भक्त्यभिहितस्य कारकद्वयस्य क्रियोपसर्जनत्वेन समुच्चयोपसर्जनाभावात् क्रदंतादिशब्दैरुपस्थितं हि कारकक्रिया लोन्येन संबध्यते कारक
२६ समुच्चयः कारणसमुच्चय इति· विभक्त्यभिहितं तु क्रियायैव कारकाणां तथैवान्वयात्· अतश्चकारेणोच्यमानः स कारकोपसर्जनत्वेनै।
वोच्यते· कारकद्वयं न च प्रधानं एकोद्देशेन च प्रधानद्वयविधाने वाक्यभेद एव· यथाहुः अनेकपदसंबंद्धं यद्येकमपि कारकं तथापि तदना
वृत्तैः प्रत्ययैर्न विधीयते यच्च यथा दक्षिणानुवादेन गवादीनामनेकेषां विधानेन न वाक्यभेदस्तथा कारकद्वयविधानेपीति तन्न· न हि गोश्चा।
श्वश्चेत्यस्मिन्वाक्ये दक्षिणानुवादेन गवादयो विधीयंते· उक्तरीत्या वाक्यभेदापत्तेः चकारश्रवणेन कथं चित्तत्परिहारेपि गवादीनामनेकेषां
द्वादशशतसंख्यायाश्च विधाने वाक्यभेद एव· आध्वर्यवशाखायां गौश्चेत्यादेः तस्य द्वादशशतमित्यंतस्य सहश्रुतत्वेन वाक्यैकवाक्यत्वमि।
त्युक्तं दशमे अतोनेन वाक्येनोभयविशिष्टा दक्षिणा विधीयते विशिष्टविधानाच्च न वाक्यभेदः अत एव पार्थसारथिमिश्रैर्दशमे तत्र तत्र सोभय
विशिष्टा विधीयते अनेकगवाद्यात्मिकैका दक्षिणा विधीयते इति चोक्तं न चैवं ऋत्विग्भ्यो दक्षिणां ददातीत्यस्यानर्थक्यं तस्यानुवादत्वात्·
ऋत्विग संबंध परत्वाद्वा दक्षिणाशब्दसामर्थ्याद्धि ऋत्विजां च सामाध्वर्यादीनां च तत्संबंधः स्यात्· एतद्वाक्यसत्वे च न भवति ऋत्विक्ष्व
स्य ब्रह्मादिगतऋतुगत यजननिमित्तत्वेन चमसाध्वर्यूणां ऋत्विक्त्वाभावस्य तृतीये उक्तत्वात्· अतश्च गौश्चाश्वश्चेत्यस्मिन्वाक्ये विशिष्टवि
धानान्न वाक्यभेदः यदग्नये च प्रजापतये च सायं जुहोतीति तु न विशिष्टविधानं होमस्याग्निहोत्रं जुहोतीत्यनेन प्राप्तत्वात्· अतश्च होमानुवादे
न समुच्चितोभयविधाने वाक्यभेदाद्गौरवापत्तेर्नानेन वाक्येन देवताद्वयं विधीयते· किंतु मंत्रवर्णप्राप्तमग्निमनूद्य तत्समुच्चितः प्रजापतिर्होमो रामः
द्देशेन विधीयते अतश्च नेदमग्नेः प्रापकं किंतु मंत्रवर्ण एव अतश्च तेनाग्नेः प्राप्तत्वान्नाग्निहोत्रपदं देवतासमर्पकं किं तर्हि नामधेयमेव तत्। २६

सिद्धमेतत्प्रख्यशास्त्रादग्निहोत्रशब्दस्य कर्मनामधेयत्वमिति· एवं प्रयाजेषु समिदादिदेवतानां समिधः समिधोऽग्न आज्यस्य व्यन्त्वित्यादिमं
त्रवर्णेभ्यः प्राप्तत्वात् समिधो यजतीत्यादिषु समिधादिशब्दस्तत्प्रख्यशास्त्रात्कर्मनामधेयं· यथाहुः विधित्सितगुणप्राप्तिशास्त्रमन्यद्यत।
स्त्विह तस्मात्तत्प्रापणं व्यर्थमिति नामत्वमिष्यत इति दिक्· श्येनेनाभिचरन् यजेतेत्यत्र श्येनशब्दस्य कर्मनामधेयत्वं तद्व्यपदेशात् तेन व्य
पदेश उपमानं तदन्यथानुपपत्तेरिति यावत्· तथाहि यद्विधेयं तस्य स्तुतिर्भवति· तद्यद्यत्र श्येनो विधेयः स्यात्तदार्थवादे तस्यैव स्तुतिः कार्या
न च यथा वै श्येनो निपत्यादत्त एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्त इत्यनेन तत्रत्येनार्थवादेन श्येनः स्तोतुं शक्यः श्येनोपमानेनार्थान्तरस्तुतेः
क्रियमाणत्वात्· न च श्येनोपमानेन स एव स्तोतुं शक्यते· उपमानोपमेयभावस्य भिन्ननिष्ठत्वात्· यदा तु श्येनसंज्ञको यागो विधीयते· तदार्थवा
देन श्येनोपमानेन तस्य स्तुतिः कर्तुं शक्यत इति श्येनशब्दस्य तद्व्यपदेशाद्यागनामधेयत्वं· तत्सिद्धं निमित्तचतुष्टयान्नामधेयत्वं· उत्पत्तिशिष्ट
गुणवलीयस्त्वमपि पंचमं नामधेयत्वे निमित्तमिति केचिदाहुः वैश्वदेवेन यजेतेत्यत्र वैश्वदेवशब्दस्य कर्मनामधेयत्वमुत्पत्तिशिष्टगुणवली।
यस्त्वात्· उक्तमत्वर्थलक्षणादिप्रकारचतुष्टयासंभवात्· न तावन्मत्वर्थलक्षणाभयान्नामधेयत्वं वक्तुं युक्तं वैश्वदेवेनेति तद्धितेनैव मत्वर्थस्य या
गस्योक्तत्वात्· सास्य देवतेत्यस्मिन्नर्थे हि तद्धितस्मरणं तत्रास्य शब्दस्य तद्धितांतर्गतस्य यद्यपि सूक्तहविषोरिति स्मृतेः सूक्ते हविषि वा मत्वर्थत्व
मवगतं· तथापि सर्वनाम्नामुपस्थितवाचित्वात्· सूक्तहविषोश्चात्रानुपस्थितत्वाद्यजेतेत्युपस्थितं यागमेवास्य शब्दोऽभिधत्त इति न यागे म।
त्वर्थलक्षणा विश्वेदेवरूपैकदेवताविधानाच्च न वाक्यभेदः नापि तत्प्रख्यशास्त्रान्नामत्वं यत्र हि विधित्सितो गुणोऽन्यतः प्राप्तस्तत्र तत्प्रख्यशास्त्रा
न्नामत्वं· यथाग्निहोत्रशब्दे अत्र चाग्नेयादयोऽष्टौ यागाः प्रकृताः तत्रामिक्षायागे यद्यपि विश्वेदेवाः प्राप्ता वैश्वदेव्यामिक्षेति तथापि सप्तसु तेषु

न्या·मी· स प्राप्तत्वाद्वैश्वदेवेन यजेतेत्यनेन तत्र तद्विधानेन तस्य स्वशास्त्रन्यायेन तद्रूपाणां नामत्वं स्यात्· न चामिक्षायागस्यैवैतन्नामेति वाच्यं· वैश्वदे
२७ वेन यजेतेति वाक्यवैयर्थ्यापत्तेः न च वैश्वदेवशब्दस्यामिक्षायागमात्रनामत्वे स एव यागोनेनानूद्यत इति वाच्यं· न च तदनुवादेनास्ति किंचि
त्फलं प्राचीनप्रवणे वैश्वदेवेन यजेतेति विधीयमानस्य प्राचीनप्रवणदेशस्य विनाप्येतद्वाक्यं· आमिक्षायाग एव संबंधोपपत्तेः विश्वेदेवसंबं
धात्तस्य आग्नेयाद्यशेषप्रकृतयागनामधेयत्वे तु न वैश्वदेवेनेति वाक्यानर्थक्यं· तद्वाक्येनाष्टौ यागा अनूद्यंते· अनुवादे नवैकप्रतीत्यारू
ढत्वात्समुदितानामष्टानामपि वैश्वदेवशब्दो नामधेयं सिद्ध्यति· एवं च प्राचीनप्रवणे वैश्वदेवेन यजेतेत्यत्र वैश्वदेवशब्देनाष्टौ यागाननू
द्य प्राचीनप्रवणविधानं तत्र सिद्धं भवति तद्वाक्यासत्त्वे अनेन वाक्येनामिक्षायाग एव प्राचीनप्रवणदेशसंबंधः स्यात्· अतश्चाष्टसु यागेषु
प्राचीनप्रवणदेशसंबंध एवैतद्वाक्यप्रयोजनं· एवं च वैश्वदेवशब्दोष्टानां नामधेयं· न च तत्र तत्प्रख्यशास्त्रं निमित्तं संभवति· सप्तसु वैश्वदे
वादिषु प्राप्तेः आतो न वैश्वदेवशब्दस्य तत्प्रख्यशास्त्रान्नामधेयमिति· नापि तद्व्यपदेशात् तादृशव्यपदेशस्यानुपलंभात्· अतश्च वैश्व
देवशब्दस्य नामधेयत्वे उक्तप्रकारचतुष्टयस्यानिमित्तत्वादुत्पत्तिशिष्टगुणावलीयस्त्वमेव निमित्तं· तथाहि वैश्वदेवेन यजेतेत्यत्र न ताव
द्प्रकृतकर्मानुवादेन देवताविधानं संभवति तेषामन्त्रानुपस्थितेः नापि देवताविशिष्टकर्मांतरविधानं संभवति गौरवापत्तेः अष्टौ हवींषी
ति अनन्यगतिकलिंगविरोधात्· अतोऽनेन वाक्येन प्रकृतकर्मानुवादेन देवता विधीयत इति वक्तव्यं· तत्रामिक्षायागे विश्वेदेवप्राप्तेः सप्त
सु यागेषु अनेन वाक्येन विश्वेदेवा विधीयंत इति वक्तव्यं· न च तत्संभवति तेषामुत्पत्तिशिष्टाग्न्याद्यवरोधात् आकांक्षया हि संबंधो भवति एमः
आग्नेयादियागानां हि देवताकांक्षा उत्पत्तिशिष्टैरग्न्यादिभिरेव निवृत्तेति न तत्र विश्वेदेवविधानं युक्तं· अतश्चोत्पत्तिशिष्टगुणावलीयस्त्वा २७

वैश्वदेवशब्दस्य कर्मनामधेयत्वमिति यथाहुः गुणांतरावरुद्धत्वान्न वकाश्योगुणोपरः विकल्पोपि न वैषम्यात्तस्मान्नामैव युज्यते· अन्येत्वा
चार्याआहुः यः शब्दो यत्र कर्मणि यद्गुणसंबंधं बोधयति स च तत्संबंधः शास्त्रांतरप्रतिपन्नस्तदा तस्य शब्दस्य तन्नामधेयत्वं तत्प्रख्यशास्त्रत्वा
त्· तत्प्रशास्त्रांतरं विधिर्वार्थवादो वेति अत्रनादरः तत्राग्निहोत्रशब्देग्निसंबंधबोधकं शास्त्रांतरं विधिरेव वैश्वदेवसंबंधं कर्मणि बोध
यति विश्वेदेवसंबंधं च्वाष्टसु यागेषु यत् विश्वेदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वमित्यर्थवादादवगतः न च विधिरेव तत्प्रख्यशास्त्रं नार्थवा
द इत्यत्र किंचित्प्रमाणमस्ति· अत एव ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र ज्योतिष्टोमशब्दस्तानि वा एतानि —— ज्योतींषि य एतस्य
स्तोमा इत्यर्थवादावगतज्योतिःसंबंधं निमित्ती कृत्य सोमयागे प्रवर्तमानस्तत्प्रख्यशास्त्रान्नामधेयं भवति· एवं प्रकृतेपि द्रष्टव्यं पंचमप्र
कारकल्पने प्रमाणाभावात्· अत एव वैश्वदेवाधिकरणवार्त्तिककारैरेवमुपसंहृतं· तत्प्रख्यतयैव सर्वेषां —नामधेयत्वमिति यच्चोत्पत्ति
शिष्टगुणवलीयस्त्वमुक्तं· तद्गुणविध्यसंभवे युक्त्याभ्युच्चयमात्रं तस्मिद्धं तत्प्रख्यशास्त्राद्वैश्वदेवशब्दस्य कर्मनामधेयत्वमिति· ननु यथा
सोमाधिकरणे ऐन्द्रवायवं गृह्णातीत्यादौ न यजिकल्पनं सोमेन यजेतेति प्रत्यक्षयजिश्रुतेरित्युक्तं· तेन न्यायेन वैश्वदेव्यामिक्षेत्यत्रापि यजिक
ल्पनं मास्तु· वैश्वदेवेन यजेतेत्यत्र यजिश्रुतेः एवं चानेन वाक्येन देवताविशिष्टकर्मविधानमस्तु तस्य च द्रव्याकांक्षायां वैश्वदेव्यामिक्षेति द्र
व्यविधानमस्तु एवं च न वाक्यद्वयस्याप्यनुवादत्वं नाप्यष्टौ हवींषीति अनन्यगतिकलिंगविरोधो भवेदिति चेन्मैवं· वैश्वदेव्यामिक्षेत्यत्र
यज्यकल्पने आमिक्षा किमनुवादेन विधीयते इति वक्तव्यं· विश्वेदेवानुवादेन विधाने द्रव्यस्य देवतागतत्वमेव स्यान्न यागांगत्वं· किञ्च वैश्व
देवी शब्दो देवता तद्धितत्वादामिक्षांतर्गतत्वेन —— तत्र विश्वेदेवानुवादेन द्रव्यविधाने वैश्वदेवीशब्देन वक्तव्यं पदश्रुतेः यथा भावना

न्या·मी· २८ यांकरणसमर्पणंधातुनैवक्रियते परंतुतेनैतूपपदेनेत्युक्तं भावार्थाधिकरणेतद्वत् तत्रचषट्कर्त्तुः प्रथमभक्षइतिवत् एकप्रसरतावि
विरोधः अतोयागानुवादेनापिद्रव्यविधानार्थं वैश्वदेव्यामिक्षेत्यत्रयजिकल्पनंतावदवश्यंकर्त्तव्यं· ततश्चपशुसोमाधिकरणन्यायवैषम्यं।
ऐन्द्रवायवंगृह्णातीत्यत्रदेवताविशिष्टग्रहणविधानेनयज्यकल्पनात् यजिकल्पनेचवैश्वदेव्यामिक्षेत्यत्रैवद्रव्यदेवताविशिष्टकर्मविधानं
युक्तंरूपद्वयश्रवणात्· एवंचाग्नेयोष्टाकपालःसौम्यःचरुरित्यादिवाक्यैर्वैश्वदेव्यामिक्षेत्यस्यवाक्यस्यप्रायःपाठोरसितोभवति अन्यथाहिते
षुद्रव्यदेवतासंबंधकल्पितयागविधानं अत्रचद्रव्यमात्रविधानमितिवैरूप्यंप्रसज्जेत किंचवैश्वदेवेनयजेतेत्यत्रवैश्वदेवशब्दस्यदेवतास
मर्पकत्वेयद्विश्वेदेवाःसमयजंतवैश्वदेवस्यतद्वैश्वदेवत्वमित्येतस्यार्थवादस्यात्यंतमेवनिरालंबनत्वंस्यात् यतएतदर्थवादाद्धिवैश्वदेवकर्त्तृ
कत्वेकर्मणिप्रवृत्तइतिज्ञायतेतद्देवतासमर्पकत्वेविरुध्यते किंचवैश्वदेवेनयजेतेत्यस्ययागविधित्वेआमिक्षायानोत्पत्तिशिष्टत्वं· तथाचत
यानवाजिनंवाधितुंशक्यतेइत्युभयोरपिआमिक्षावाजिनयोरेकयागांगत्वंस्यात्· तथाचविकल्पःसचाष्टदोषदुष्टइतितस्माद्वैश्वदेव्यामिक्षे
त्यत्रैवयागविधानं इतरस्यत्वनुवादनं अनुवादत्वेचयथानानर्थक्यंतथोक्तमित्यास्तांतत्· तस्माद्वैश्वदेवेनयजेतेत्यस्यशब्दस्यकर्मना
मधेयत्वं· तदेवंनिरूपितंमत्वर्थलक्षणादिप्रकारचतुष्टयनिरूपणेननामधेयार्थपरिच्छेदकतयार्थवत्वं· दामोदरोजयति· अनर्थहेतुकर्मणः
सकाशात्पुरुषस्यनिवृत्तिकरणत्वेननिषेधानापुरुषार्थानुबंधित्वं·॥ ः ॥ तथाहि·एकपक्षस्यानुष्ठानेद्वितीयपक्षवाक्यस्यसतोपिप्रवर्त्तक
त्वस्यानादरःद्वितीयपक्षस्यानुष्ठानेतद्वाक्यस्यानादृतप्रवर्त्तकत्वादनादरः पूर्ववाक्यस्यानुष्ठानेद्वितीयपक्षवाक्यस्यसतोपिप्रवर्त्तकत्वस्याना रामः
दरःद्वितीयपक्षस्यानुष्ठानेतद्वाक्यस्यद्वितीयपक्षसमयेनादृतप्रवर्त्तकत्वस्यानादरःपूर्ववाक्यस्यादृतप्रवर्त्तकत्वपरित्यागःपुनरपिप्रथम २८

पक्षस्यानुष्ठानेतद्वाक्यस्यद्वितीयपक्षसमयेनादृतप्रवर्तकत्वस्यानादरइतिवाक्यगाश्चत्वारः अर्थोपिएकैकपक्षानुष्ठानेप्रमितस्त्यज्यतेकश्चि
द्वनात्पपश्चाद्गृह्यतइत्यर्थविषयाश्चत्वारोन्यायनिधावुक्ताः इतिटिप्पण्यांतथाहीत्यस्य ॥ तथाहिपथाविधयःप्रेरणात्मभिदधतःस्वप्रव
र्तकत्वनिर्वाहार्थंविधेयस्ययागादेःश्रेयःसाधनत्वमाक्षिपंतःपुरुषंतत्रप्रवर्त्तयंतिः एवंनकलंजंभक्षयेदित्यादयोनिषेधाअपिनिवर्त्तनात्म
भिदधतःस्वनिवर्त्तकत्वनिर्वाहार्थंनिषेध्यकलंजभक्षणादेरनर्थहेतुत्वमाक्षिपंतःपुरुषंततोनिवर्त्तयंतिः ननुकथंनिषेधानांनिवर्त्तनाप्रतिपा
दकत्वंयावतानभक्षयेन्नहंतव्यइत्येवमादौ अव्यवधानेननञर्थस्याभावस्यधात्वर्थवर्जनकर्त्तव्यतेवसर्वत्रवाक्यार्थःप्रतीयतेततश्चयजेतेत्या
दौयागकर्त्तव्यतावाक्यार्थः एवंनिषेधेषुतत्तद्धात्वर्थवर्जनकर्त्तव्यतावाक्यार्थोननिवर्त्तनेतिचेत् मैवं अव्यवधानेपिधात्वर्थस्यप्रत्ययार्थोपस
र्जनत्वेनोपस्थितस्यनञर्थेनान्वयायोगात्ः नह्यन्योपसर्जनमन्येनान्वेतिः राजपुरुषमानयेत्यत्रनहिराज्ञ आनयनान्वयित्वंः ततश्चाव्यवधा
नेपिनञर्थस्यनधात्वर्थेनान्वयः आरुण्यस्येवैकहायिन्या नापिकलिंजादिपदार्थैरन्वयः तेषामपिकारकोपसर्जनत्वेनभिन्नपदस्यनञर्थे
नान्वयायोगात् एकहायन्याइवारुण्येन अतश्चान्येनान्वयायोगान्नञर्थःप्रत्ययार्थेनसंबध्यते तस्यप्राधान्यात् क्रयभावनयेवारुण्या
दीनितत्रापिनाख्यातांशवाच्ययार्थ्यभावनयातस्या अपिलिङंशवाच्यप्रवर्त्तनोपसर्जनत्वेनोपस्थितत्वात् अतोलिङंशेननञःसंब
ध्यतेतस्यसर्वापेक्षयाप्राधान्यात् नञश्चैषस्वभावोयत्स्वसंबंधिप्रतिपक्षबोधकत्वंनास्तीत्यत्रह्यस्तीतिसत्वशब्देनसंबध्यमानोनञ्सत्वप्रतिप
क्षंअसत्वंगमयति तदिहलिङर्थस्तावत्प्रवर्त्तना अतस्तेनसंबध्यमानोनञ्प्रवर्त्तनाप्रतिपक्षंनिवर्त्तनांगमयतिविधिवाक्यश्रवणेयंमांप्रव
र्त्तयतीतिवन्निषेधवाक्यश्रवणेऽयंमांनिवर्त्तयतीतिनिवृत्त्यनुकूलव्यापारनिवर्त्तनायाःप्रतीतिरनुभवसिद्धा अतश्चसर्वत्रनिषेधेषुनिवर्त्तनैव

न्या·मी· वाक्यार्थः एवंच विधिनिषेधयोर्भिन्नार्थत्वं सिद्धं भवति हननादिवर्जनकर्त्तव्यता वाक्यार्थपक्षे तु कर्त्तव्यताया एवोभयत्र प्रतिपाद्यत्वात्तयोरेका
२९ र्थत्वं स्यात्तच्चनयुक्तं· यथाहुः अंतरं यादृशं लोके ब्रह्महत्याश्वमेधयोः दृश्यते तादृगेवेदं विधानप्रतिषेधयोरिति· तथा फलबुद्धिप्रमेयाधिका
रिबोधकभेदतः पंचधात्यंतभिन्नत्वाद्भेदो विधिनिषेधयोरिति यन्मते इष्टसाधनत्वं लिङर्थस्तन्मते लिङ्संसृष्टो नञ् इष्टसाधनत्वप्रतिप
क्षमनिष्टसाधनत्वं गमयति सर्वथापि तु नञः प्राधान्यात्प्रत्ययेनान्वयः यदा तु तदन्वये किंचिद्बाधकं तदा गत्या धात्वर्थेनान्वयः तच्च बाधकं द्विवि
धं तस्य व्रतमित्युपक्रमो विकल्पप्रसक्तिश्च अनेन च बाधकद्वयेन नञ्युक्तेषूक्तेषु विद्वाक्येषु पर्युदासाश्रयणं भवति तदभावे निषेध एव पर्यु
दासः स विज्ञेयो यत्रोत्तरपदेन नञ् प्रतिषेधः स विज्ञेयो क्रियया सह यत्र नञ् तन्नेक्षेतोद्यंतमादित्यमित्यादौ पर्युदासाश्रयणं तस्य व्रतमित्यु
पक्रमात्· तथाहि व्रतशब्देन कर्त्तव्यार्थ उच्यते अतश्च स्नातकस्य कर्त्तव्यत्वेनोपक्रमात् किं तत्कर्त्तव्यमित्यपेक्षायामग्रे नेक्षेतोद्यंतमादित्यादौ क
र्त्तव्य एवार्थो वक्तव्य आकांक्षिताभिधानात्· अर्थांतरोक्तौ च पूर्ववाक्यस्य साकांक्षत्वेनाप्रामाण्यप्रसंगात्· नहि कर्त्तव्यार्थवक्तव्यत्वेनोपक्रमे
ग्रे च तदनभिधाने पूर्ववाक्यस्य साकांक्षत्वेनाप्रामाण्यं भवति नच साकांक्षस्याप्रामाण्यं गौरश्वः पुरुषः इत्यादावपि प्रसंगात् किंच नेक्षेतेत्यस्योपक्र
मेण प्रतीयमाना एकवाक्यता च न स्यात्· अर्थांतरोक्तेः अतश्चास्मिन्वाक्ये कर्त्तव्य एवार्थो वक्तव्यः तदुक्तौ च न नञः प्रत्ययेन संबंधो घट
ते तत्संबंधे कर्त्तव्यार्थोक्तेरनुपपत्तेः प्रत्ययाच्चावतारितो नञ् धातुना संबध्यते तत्संबंधे च न नञः प्रतिषेधकत्वं विधायकसंबंधेनैव तस्य प्रति
षेधकत्वस्य विधायकत्वप्रतिपक्षत्वात्· नामधातुयोगे तु न नञः प्रतिषेधकत्वं तयोरभिधायकत्वात्· यथाहुः नामधात्वर्थयोगी तु नैव नञ् रामः
प्रतिषेधकः वदत्यब्राह्मणाधर्मावन्यमात्रविरोधिनाविति· अतश्च नेक्षेतेत्यत्र नञो धातुयोगान्निजिक्षितिश्चांईक्षणविरोधी कश्चनार्थः प्रतिपा २९

द्यते· ननु तदन्यतद्विरुद्धतदभावेषु नञ् इति सत्यपि स्मरणेन ञः स्वसंसृष्टाभाव एव शक्तिः लाघवात्· न तदन्यतद्विरुद्धत्वयोः तयोरभावघटि
तत्वेन गौरवात्· अनेकार्थत्वस्य चान्याय्यत्वात् अतो नञो धातुयोगे धात्वर्थाभावबोधकत्वमेव न तु तद्विरुद्धार्थबोधकत्वमिति चेत्सत्यं नञो
ऽभाव एव शक्तिः स्मरणं तु प्रतीत्यभिप्रायं· नाम धात्वर्थयोगीत्यपि प्रतीत्यभिप्रायं तथापि नेक्षेतेत्यत्र प्रत्ययस्य नञा संबंधात्· तेन तावत्कि।
ञ्चिदर्थो विधेयः तत्र न तावद्धात्वर्थो विधातुं शक्यते नञा तदभावबोधनात्· नापि तदभावो विधातुं शक्यते अभावस्याविधेयत्वात्· अतश्चन
ञिक्षितिभ्यां विधानयोग्यः कश्च नेक्षणाविरोधी अर्थो लक्षणया प्रतिपाद्यते स चेक्षणविरोधी लक्ष्यमाणः पदार्थो नेक्षेदित्यनीक्षणसंकल्पः त
स्येक्षणविरोधित्वात् सत्यपि पदार्थान्तरस्येक्षणविरोधित्वे सर्वक्रियाविनाभूतत्वेन संकल्पस्यैव लक्षणा स एव नेक्षेतेत्यत्र कर्तव्यतया विधीयते
अनीक्षणसंकल्पेन भावयेदिति भाव्याकांक्षायां च एतावता हेनसा वियुक्तो भवतीति वाक्यशेषावगतः पापक्षयो भाव्यतया संबध्यते· एवं चात्र पा
पक्षयाय संकल्पस्य कर्तव्यतया विधानात्तस्य व्रतमित्यनेनैकवाक्यता सिद्धा भवति· तत्सिद्धं नेक्षेतेत्यत्र तस्य व्रतमित्युपक्रमात्पर्युदासाश्रयण
मिति· नानुयाजेषु ये यजामहं करोतीत्यत्र विकल्पप्रसक्त्या तदाश्रयणं तथाहि यद्यत्र प्रधानसंबंधलोभान्नञः प्रत्ययसंबंधः स्वीक्रियेत तत था
सत्यनेन वाक्येनानुयाजेषु ये यजामहः प्रतिषिध्यत इति वक्तव्यं अनुयाजेषु ये यजामहं न कुर्यादिति न च तत्र तस्य प्रतिषेधः प्राप्तिं विनासं
भवति प्राप्तिसापेक्षत्वात्प्रतिषेधस्य अत एव नान्तरिक्षे न दिवीत्यस्य न प्रतिषेधकत्वं अंतरिक्षे चयनाप्राप्तेः अत एव ब्राह्मणो न हंतव्य इत्यस्य नित्य
वद्धननिवर्त्तकत्वं न स्यात् सर्वो हि पुरुषः कदाचिद्धननादौ प्रवर्त्तते कदाचिद्रागाद्यभावेन प्रवर्त्तते· तत्र यदि निषेधस्य प्राप्तिसापेक्षत्वं न स्यात्·
तदा रागाविरोधाय हननादावप्रवृत्ते प्रत्येव शास्त्रप्रामाण्योपपत्तौ रागादिना हननादौ प्रवृत्तेन पुंसा न ततो निवर्त्तितव्यं प्राप्तिसापेक्षत्वे तु स्वयमप्र




∨ रागादिना प्रवृत्तं प्रत्येव भ्रांतिनिमित्तरागबाधेन निषेधशास्त्रप्रवृत्तेः १

वृत्तं प्रति प्रशक्त्यभावेन निषेधशास्त्राप्रवृत्तेः युक्ताप्रवृत्तस्य ततो निवृत्तिः अतश्च ब्राह्मणो न हंतव्य इत्यस्य निषेधस्य निवृत्तिनियमबोधकत्वं · व्रीहीन
वहन्यादित्यस्येवावघातनियमबोधकत्वं यथा खलु व्रीहीनवहन्यादिति शास्त्रं वैतुष्यार्थं अवघाते स्वप्रवृत्तं पुरुषं प्रति न प्रवर्त्तते वैयर्थ्यात् किंतु
दलनादौ प्रवृत्तं प्रति एवं न हन्यादिति शास्त्रं हननात्स्वयं निवृत्तं पुरुषं प्रति न प्रवर्त्तते वैयर्थ्यात् किंतु हनने प्रवृत्तं पुरुषं कर्त्तव्यत्वेन प्रशक्तस्य
प्रतिषेधात् यत्कर्त्तव्यं तन्नेति अतश्च प्राप्तिसापेक्षत्वात्प्रतिषेधानां अनुयाजेषु येयजामह प्रतिषेधे तस्य तत्र प्राप्तिर्वक्तव्या सा न तावद्धननादा
विवरागतः संभवति अतो यजतिषु येयजामहं करोतीति शास्त्रात्सा वक्तव्या शास्त्रप्राप्तस्य च प्रतिषेधे विकल्पः स्यात् शास्त्रेण भ्रांतिनिमित्तराग
स्येव शास्त्रांतरस्यात्यंतबाधायोगात् न च पदं शास्त्रेणाहवनीयशास्त्रस्येव नानुयाजेष्विति विशेषशास्त्रेण यजतिषु येयजामहं करोतीति सा
मान्यशास्त्रस्य बाधः स्यादिति वाच्यं · शास्त्रयोर्हि तत्र बाध्यबाधकभावो यत्र परस्परनिरपेक्षता न हि पदशास्त्रस्य स्वार्थविधानार्थमाहवनीयशा
स्त्रापेक्षास्ति निषेधशास्त्रस्य तु प्रशक्त्यर्थं यजतिषु येयजामहं करोतीति विधेरस्त्यपेक्षा एवं च निषेधशास्त्रस्य विशेषविषयत्वेन प्राबल्यव
त् विधिशास्त्रस्याप्युपजीव्यत्वेन प्राबल्यमस्तीति न निषेधेन विधेरत्यंतबाधो युक्त इति विहितप्रतिषिद्धत्वाद्विकल्पः स्यात् स च न युक्तः विक
ल्पे हि पक्षे शास्त्रस्याप्रामाण्यं भवति न ह्यनुयाजेषु येयजामहकरणे नानुयाजेष्वित्यस्य प्रामाण्यं संभवति व्रीह्यनुष्ठानसमये इव यवशास्त्र
स्य द्विरदृष्टकल्पना च स्यात् विधेर्हि एवं ज्ञायते यत् अनुयाजेषु येयजामहकरणे कश्चनोपकारो भवतीति निषेधाच्च तदकरणादिति ज्ञायते।
अनृतवदनाकरणादिवद्दर्शपूर्णमासयोः कश्चिदुपकारः क्रियत इति स चोपकारोऽदृष्टरूप इति द्विरदृष्टकल्पनाप्रसंगः अतश्च विकल्पो न युक्तः
प्रतिषेधाश्रयणे च तदापत्तेर्न तदाश्रयणं किंतु तत्र नञः अनुयाजशब्देन संबंधमाश्रित्य पर्युदास आश्रीयते नञनुयाजशब्दाभ्यामनुयाजव्यति

रिक्तलक्षणात् अनुयाजव्यतिरिक्तेषु येयजामहं करोतीति अन्नच वाक्ये येयजामहः कर्त्तव्यतया न विधीयते· यजतिषु येयजामहं करोतीत्य
नेनैव विहितत्वात्· किंतु सामान्यशास्त्रविहितयेयजामहानुवादेन तस्यानुयाजव्यतिरिक्तविषयता विधीयते यत् यजतिषु येयजामहं करो
ति तदनुयाजव्यतिरिक्तेषु एवं सामन्यशास्त्रस्य विशेषापेक्षिणः नानुयाजेष्वित्यनेनानुयाजव्यतिरिक्तविषयसमर्पणादनुयाजव्यतिरि
क्तेषु येयजामहः कर्त्तव्यतयाप्राप्तः अनुयाजेषु स नकर्त्तव्यतयाप्राप्तो न वा प्रतिषिद्ध इति न विकल्पः लक्षणया चानुयाजव्यतिरिक्तविषयसम
र्पणान्नानुयाजेष्विति वाक्यस्य नाप्रामाण्यं· अतश्च पर्युदासाश्रयणेन किंचिद्बाधकं तत्सिद्धं नानुयाजेष्विति वाक्ये विकल्पभयात्पर्युदासाश्रय
णमितिः ननु पर्युदासाश्रयणे यजतिषु येयजामहं करोतीति शास्त्रेण यागसामान्ये प्राप्तस्य येयजामहस्य नानुयाजेष्वित्यनेनानुयाजव्यतिरि
क्ते संकोचनात्पर्युदासस्योपसंहारादभेदः स्यादिति उपसंहारे हि सामान्यप्राप्तस्य विशेषे संकोचो भवति यथा पुरोडाशं चतुर्द्धा करोतीति पुरोडाश
सामान्ये प्राप्तं चतुर्द्धाकरणं आग्नेयं चतुर्द्धा करोतीति अनेन संकोच्यते इति चेन्न· तन्मात्रसंकोचार्थत्वादुपसंहारस्य तदन्यमात्रसंकोचार्थत्वात्प
र्युदासस्य इति केचित्· अन्येतु उपसंहारो नाम सामान्यतः प्राप्तस्य विशेषे संकोचनरूपो व्यापारविशेषो विधेः पर्युदासः सविज्ञेयो यत्रोत्तरपदेन नं
ञ् इत्यभियुक्तोक्त्या प्रत्ययातिरिक्तेन धातुना वा नाम्ना वा नञः संबंधः पर्युदासः अत अनयोस्तावत्स्वरूपतः स्पष्ट एव भेदः एवं सत्यभेदः आशं
क्येत यदि यत्र पर्युदासस्तत्रावश्यमुपसंहारः स्यात् न चैतदस्ति नेक्षेतोद्यंतमित्यादौ सत्यपि तस्मिन्नुपसंहाराभावात्· नहि तत्राग्नेयं चतुर्द्धाकर
णमिव सामान्ये प्राप्तं किंचिद्विशेषे संकोच्यते पापक्षयोद्देशेनानीक्षणसंकल्पमात्रविधानात् प्रकृतोदाहरणे तु यजिसामान्ये प्राप्तस्य येयजाम
हस्यानुयाजव्यतिरिक्ते संकोचनाद्यजिविधेरुपसंहारविधित्वं भवति नैतावता किंचिद्विरुध्यते· विध्यभावे हि कथं विधिकार्यमुपसंहारः पर्युदासेन

क्रियतइतिभवतिविरोधः नचात्रविधिर्नास्ति नञोनुयाजपदसंबंधेनविधेर्विधायकत्वस्याव्याघातात्· अत्रहिपर्युदासोऽनुयाजव्यतिरिक्त
विषयसमर्पकः आग्नेयपदवत् उपसंहारकस्तुविधिरेव नचात्रतन्मात्रसंकोचाभावान्नोपसंहारइतिवाच्यं· तन्मात्रसंकोचइतिकोर्थः आ
ग्नेयमात्रेसंकोचः सामान्यप्राप्तस्यविशेषमात्रेसंकोचोवा आद्येऽनारभ्याधीतसाप्तदश्यस्यमित्रविंदादिप्रकरणस्थेनवाक्येनोपसंहारोनस्यात्।
आग्नेयेसंकोचाभावात्· द्वितीये चतुर्द्धाकरणस्यपुरोडाशमात्रेप्राप्तस्याग्नेयेसंकोचवत् अनुयाजानुयाजसाधारण्येनप्राप्तस्यानुयाजेषुसंको
चादुपसंहारः स्यादेव एतावांस्तुविशेषः आग्नेयादिवाक्येषुआग्नेयादयोविशेषाः स्वपदोपस्थापकाः प्रकृतेतुपर्युदासे नतस्योपस्थितिरिति।
उपसंहारन्यायस्त्वविशिष्ट एव यश्चतदन्यमात्रसंकोचनार्थत्वात्पर्युदासस्येतितन्न· नेक्षेतेत्यत्रसत्यपिपर्युदासेसंकोचाभावात्· नह्यत्रसामा
न्येप्राप्तंतदन्यमात्रेसंकोच्यते संकल्पमात्रविधानादित्युक्तमित्यास्तांतावत् तत्सिद्धंनानुयाजेष्वित्यत्रविकल्पप्रसक्त्यापर्युदासाश्रयणमिति।
यत्रतुस आश्रयितुंनशक्यते तत्रतत्प्रसक्तावपिनिषेध आश्रीयते· यथानातिरात्रेषोडशिनं गृह्णातीत्यत्रह्यतिरात्रेषोडशिनंगृह्णातीतिशा
स्त्रप्राप्तमितिरात्रेषोडशिग्रहणंप्रतिषिध्यतइति विहितप्रतिषिद्धत्वात् विकल्पप्रसक्तावपिपर्युदासोनाश्रीयतेऽशक्यत्वात्· यदिह्यत्रनञः
षोडशिपदेनसंबंधः स्वीक्रियेत तदा अतिरात्रेषोडशिव्यतिरिक्तंगृह्णातीतिवाक्यार्थः स्यात्· तत्रचातिरात्रेषोडशिनंगृह्णातीतिप्रत्यक्षविधि
विरोधः एतएवातिरात्रपदेननञः संकोचःऽतिरात्रेषोऽडशिनंगृह्णातीतिप्रत्यक्षविधिविरोधात्· अतश्चात्र — पर्युदासस्यानुपपत्तेर्नि
षेधएवस्वीक्रियते विकल्पोपिस्वीक्रियते अनन्यगतेः अतश्चैतत्सिद्धं यत्रतस्यप्रवृत्तमित्याद्युपक्रमः विकल्पप्रसक्तिश्च नास्तितत्रप्रतिषेधो। रामः
यथानकलंजंभक्षयेदिति यत्रवाविकल्पप्रसक्तावपिपर्युदासो आश्रयितुंनशक्यते तत्रप्रतिषेधः यथानातिरात्रेषोडशिनंगृह्णातीति एतावां ३१

स्तुविशेषः यत्रविशेषःयत्रविकल्पापादकः प्रतिषेधः तत्रप्रतिषिध्यमानस्यनानर्थहेतुत्वं। उभयोरपिविधिनिषेधयोः क्रत्वर्थत्वात् यत्र
तुनविकल्पः प्रसज्यतेप्राप्तिश्चरागतः प्रतिषेधश्चपुरुषार्थस्तत्रनिषिध्यमानस्यानर्थहेतुत्वं। यथाकलञ्जभक्षणास्यदीक्षितोनददातिन
जुहोतीत्यादिषुतुदानहोमादीनांशास्त्रप्राप्तावपिपुरुषार्थत्वेनप्राप्तत्वात्क्रत्वर्थत्वेनचप्रतिषेधात्तुल्यार्थत्वाभावेनविकल्पाप्रशक्तावपिन
तेषामनर्थहेतुत्वं। रागतः प्राप्त्यभावात्। रागतः प्राप्तस्यापिक्रत्वर्थत्वेनप्रतिषेधे तदनुष्ठानात्क्रतोर्वैगुण्येनानर्थहेतुत्वापत्तिः। यथास्वस्तु
पगमनादिप्रतिषेधे। रागतःप्राप्तस्यपुरुषार्थत्वेनप्रतिषेधेनिषिध्यमानस्यानर्थहेतुत्वमितिदिक्। तत्सिद्धंनिषेधानांपुरुषार्थानुवंधित्वं॰ एवं
सर्वस्यापिवेदस्यपुरुषार्थानुवंधित्वं॥ ——————— प्रकृतमनुसरामः तदेवंयथाविध्यादीनामध्ययनविध्युपात्तानांनानर्थक्यं एवमर्थवा
दानामपितदुपात्तत्वेनानर्थक्यानुपपत्तेः स्वार्थप्रतिपादनेचप्रयोजनाभावात् लक्षणयाप्रयोजनवदर्थपर्यवसानंवक्तव्यं॰ तेचार्थवादाद्विविधाः
विधिशेषानिषेधशेषाश्च तत्रवायव्यंश्वेतमालभेतेत्यादिविधिशेषाणांवायुर्वैक्षेपिष्ठादेवतादीनामर्थवादानांविधेयार्थस्तावकतयार्थवत्वं।
वर्हिषिरजतंनदेयमित्यादिनिषेधशेषाणांसोरोदीदित्यादीनामर्थवादानांतुनिषेध्यनिंदकतयेति अतश्चलक्षणयाप्राशस्त्यमप्राशस्त्यंचस्वस
न्निधिपठितविधिनिषेधापेक्षितत्वात्स्वार्थप्रतिपादनेप्रयोजनमलभमानैरर्थवादैर्वोध्यते तच्चप्राशस्त्यज्ञानंशब्दभावनायामितिकर्तव्यतात्वेनसं
वध्यते परमप्रकृतमनुसरामः तत्सिद्धंवक्ष्यमाणार्थभावनाभाव्यकालिङादिज्ञानकरणिकाप्राशस्त्यज्ञानेतिकर्तव्यताकाशाब्दीभावनालिङंशे
नोच्यतेइति। ननुकेयंशाब्दीभावनाउच्यतेपुरुषप्रवृत्त्यनुकूलोव्यापारविशेषः सएवविध्यर्थः लिङादिश्रवणेऽयंमांप्रवर्तयतीतितस्यनियमेन
प्रतीतेः यत्तुइष्टसाधनत्वंविध्यर्थइतितन्न॰ तथासतिइष्टसाधनमितिशब्दस्यविधिशब्दःपर्यायःस्यात् नचपर्यायत्वंयुज्यतेसंध्योपासनंतेइष्टसा

त्वंकुर्विति सहप्रयोगात् पर्यायाणांचसहप्रयोगाभावात् अतश्चव्यापारविशेषएवविध्यर्थः सचलोकेपुरुषनिष्ठोभिप्रायविशेषःवेदेतुपुरुषा
भावाच्छब्दनिष्ठएवप्रेरणापरपर्यायइत्युक्तं ननुलोकेशब्दनिष्ठेप्रेरणापरपर्यायेव्यापारशब्दप्रयोगाभावेनशक्तिग्रहाभावात् कथंतस्यविधि
शब्दात्प्रतीतिरितिचेत्सत्यमेतत् तथापिबालस्तावत्स्तनपानादौस्वकृतरोदनादिजनितमातृप्रवृत्तेःस्वाभिप्रायरूपप्रवर्त्तनाज्ञानजन्यत्वावधा
रणात्सविधिकप्रयोजकवाक्यश्रवणसमनंतरभाविनीं प्रयोज्यवृत्तिमुपलभ्यतत्कारणत्वेनतस्यप्रवर्त्तनाज्ञानमनुमिमीते यद्यपिभोजनादौस्व
प्रवृत्तेःसमीहितसाधनताज्ञानपूर्वकत्वात्प्रयोज्यवृद्धप्रवृत्तेरपितत्पूर्वकत्वाध्यवसानंयुक्तं तथाप्यन्यप्रेरितप्रवृत्तौप्रवर्त्तनाज्ञानजन्यत्वस्यो
क्तमातृप्रवृत्तौदर्शनेनप्रयोज्यवृद्धप्रवृत्तेरपि अन्यप्रेरितप्रवृत्तित्वात्तत्कारणत्वेनप्रवर्त्तनाज्ञानस्यैवाध्यवसानं तच्चप्रवर्त्तनाज्ञानमन्वयव्यतिः
रेकाभ्यांप्रयोजकवाक्यजन्यमित्यवधारयति तत्रचावापोद्वापाभ्यांप्रवर्त्तनायांविधिशक्तिमवधारयति प्रवृत्त्यनुकूलोव्यापारःप्रवर्त्तनासचव्या
पारःप्रैषादिरूपोविविधइतिप्रत्येकंव्यभिचारित्वाद्विधिशब्दवाच्यत्वानुपपत्तेःप्रवर्त्तनासामान्यमेवविधिशब्दवाच्यमितिकल्पयति एवंचविधि
श्रवणेप्रैषादिरूपस्यवक्त्रभिप्रायस्यप्रवर्त्तनात्वेनैवरूपेणप्रतीतिर्नविशेषरूपेणतथैवशक्तिग्रहात् विशेषरूपेणतुप्रतीतिर्लक्षणयैव एवंच
वैदिकलिङादिश्रवणेपिप्रवर्त्तनासामान्यमेवप्रतीयते तत्रकोसौव्यापारइत्यपेक्षायांप्रैषादिरूपस्यवक्त्रभिप्रायस्यापौरुषेयेवेदेनुपपत्तेःशा
ब्दनिष्ठएवप्रेरणापरपर्यायःकश्चिद्व्यापारइतिकल्प्यते अतश्चशब्दनिष्ठएवप्रेरणापरपर्यायोव्यापारःशाब्दीभावनासैवचप्रवर्त्तनात्वेनरूपेण
विध्यर्थइति अयमेवचार्थोऽभिधाभावनामाहुरन्यामेवलिङादयइतिवार्त्तिकस्य अभिधीयतेऽनेनेतिव्युत्पत्त्याभिधाशब्देनशब्दउच्यते तद्व्या 
पारात्मिकाभावनालिङादिवाच्येतिकेचिदाचार्याः अन्येत्वाहुःसत्यंप्रवर्त्तनासामान्यंविध्यर्थःतथैवशक्तिग्रहात् प्रवृत्त्यनुकूलःव्यापारःप्रव 

र्तेना अपौरुषेये च वेदे प्रेषादेरसंभवात्कस्मिंश्चित्पुरुषप्रवृत्त्यानुकूलो सौ व्यापार इत्यपेक्षायां धात्वर्थगतं समीहितसाधनत्वमेवेति कल्प्यते तस्या
पि स्वप्रवृत्त्यनुकूलत्वात् सर्वो हि समीहितसाधनतां ज्ञात्वा प्रवर्त्तते अन्यप्रेरितोपि यदीष्टसाधनतां न जानाति तदा नैव प्रवर्त्तते स्वतंत्रप्रेरणा
वादेपि तदाक्षिप्तसमीहितसाधनताज्ञानेन स्वीक्रियते एवान्यथा विधेः प्रवर्त्तकत्वानुपपत्तेः अतश्चावश्यकत्वात्समीहितसाधनतैव प्रवर्त्तनात्वेन
रूपेण विध्यर्थः एवं च विधिशब्दस्य परनिष्ठव्यापारबोधकत्वं लोकसिद्धं भवति किं च शब्दे एको व्यापारः स्पंदाद्यतिरिक्तः कल्पनीयः तस्य च स्वप्र
वृत्तौ पराधीनप्रवृत्तौ वा करणत्वेनाक्लृप्तस्य प्रवर्त्तनात्वेन रूपेण ज्ञातस्य प्रवृत्त्यनुकूलत्वं। शब्दस्य च परनिष्ठव्यापारज्ञापकत्वेन क्लृप्तस्य स्व
निष्ठव्यापारबोधकत्वं विधेश्च प्रवर्त्तकत्वनिर्वाहार्थं धात्वर्थस्य समीहितसाधनत्वमिति कल्पनाद्वयमावश्यकस्यैव समीहितसाधनत्वस्य स्व
प्रवृत्तिहेतुत्वेन क्लृप्तस्य प्रवर्त्तनारूपेण विध्यर्थत्वकल्पने लाघवात् अन्यनिष्ठत्वाच्च न च विधेः प्रवर्त्तकत्वनिर्वाहार्थं समीहितसाधनत्वक
ल्पनात् प्रेरणानभिधाने च विधेरप्रवर्त्तकत्वात् धात्वर्थस्य समीहितसाधनत्वकल्पकमेव नास्तीति वाच्यं प्रवर्त्तनाभिधानेन एतन्मतेपि विधेः
प्रवर्त्तकत्वात् विध्यभिहितस्य च प्रवर्त्तनासामान्यस्य विशेषमंतरेणापर्यवसानात्समीहितसाधनत्वाक्षेपकत्वात् न चेष्टसाधनत्वस्य विध्यर्थत्वे
संध्योपासनं ते इष्टसाधनं तत्त्वं कुर्विति सहप्रयोगानुपपत्तिरिति वाच्यं इष्टसाधनत्वस्य विशेषरूपेण विधिनानभिधानात् प्रवर्त्तनात्वेन रूपेणा
भिधानात् सामान्यशब्दस्य च विशेषशब्देन दृष्टः सहप्रयोगः पांचालराजा द्रुपद इत्यादौ तस्मात्समीहितसाधनतैव प्रवर्त्तनात्वेन रूपेण विध्य
र्थः सैव च तेन रूपेण शब्देनैवाभिधीयते इति शाब्दी भावना उक्तवार्त्तिकस्याप्ययमेवाभिप्रायः अभिधीयते साभिधा समीहितसाधनता सैव प्रवर्त्तना
भिहिता पुरुषप्रवृत्तिं भावयतीति भावना तां लिङादय आहुरिति यथाहुः पुंसो नेष्टाभ्युपायत्वात्क्रियास्वन्यः प्रवर्त्तकः प्रवृत्तिहेतुं धर्मं च प्रवदंति प्रवर्त्त

नामिति तदिदं यजेतेत्यत्र लिङंशेन शाब्दीभावनोच्यते इति आख्यातांशेन चार्थीभावनोच्यते ननु केयमार्थीभावना कर्तृव्यापार इति चेन्न यागादेरपि तद्व्यापारत्वेन भावनात्वापत्तेः न चेष्टापत्तिः तस्य प्रकृत्यर्थत्वेन प्रत्ययार्थत्वाभावादिति चेदत्राहुः सत्यं न यागो भावना किंतु स्वर्गेच्छाजनितो यागविषयो यः प्रयत्नः सा भावना स एव चाख्यातांशेनोच्यते यजेतेत्याख्यातश्रवणे यागे यजेतेति प्रतीतेर्जायमानत्वात् यश्च प्रयत्नपूर्वकं गमनादि करोतीति तस्मिन्नेव वृत्तो गमनं करोतीति प्रयोगदर्शनात् वातादिना स्पंदमाने तु नायं करोति किंतु वातादिनास्य स्पंदो जायते इति प्रयोगात्करोत्यर्थस्तावत्प्रयत्नः करोति सामानाधिकरण्यं चाख्याते दृश्यते यजेत यागं न कुर्यात् पचति पाकं करोति गच्छति गमनं करोति इति अतश्च करोति सामानाधिकरण्यात्प्रयत्नस्याख्यातवाच्यत्वं न च रथो गच्छतीति प्रयोगानुपपत्तिः रथे प्रयत्नाभावादिति वाच्यं वोढुर गतं प्रयत्नं रथे आरोप्य प्रयोगोपपत्तेः यन्मते त्वन्योत्पादानुकूलं व्यापारसामान्यं भावना तन्मतेपि रथे गमनातिरिक्तव्यापारानुपलब्धेः रथो गच्छतीति प्रयोगस्यौपचारिकत्वमेवेति अतश्च प्रयत्न एवार्थी भावना यथाहुः प्रयत्नव्यतिरिक्तार्थभावना तु न शक्यते वक्तुमाख्यातवाच्येह प्रस्तुतेत्युपरम्यत इति अन्ये त्वाहुः भवितुर्भवनानुकूलो भावकव्यापारस्तावद्भावना यस्मिन्व्यापारे कृते करणं फलोत्पादनाय समर्थं भवति तादृशव्यापार इति यावत् स एव चाख्यातार्थः कुठारेण छिनत्ति इत्याख्यातश्रवणे हि भवत्येतादृशी मतिः कुठारेण तथा व्याप्रियेत यस्मिन्व्यापारे कृते कुठारेण छेदनं भवतीति एवं यजेत स्वर्गकाम इत्यस्यायमर्थः यागेन तथा व्याप्रियेत यस्मिन्व्यापारे कृते यागात्स्वर्गो भवतीति स च व्यापारः क्वचिदुद्यमननिपतनादिः क्वचिदग्न्याधानादिब्राह्मणतर्पणान्तः कथंभावाकांक्षायां विशेषरूपेण पश्चादवगम्यते अन्योन्य दानुकूलत्वेन सामान्यतस्त्वाख्यातादेवावगम्यते। रथो ग्रामं गच्छतीत्याख्यातेन ग्रामप्राप्त्यनुकूलो व्यापार एव प्रतीयते रथस्तथा गमने व्याप्रियते यस्मिन्व्यापारे कृते गमनाद्ग्रामप्राप्तिर्भवती

तिप्रतीतेः नत्वत्रगमनमात्रमाख्यातार्थः तस्य धातुनोक्तत्वात् तत्र कोसौ व्यापार इत्यपेक्षायां पूर्वोत्तरावांतरदेशविभजनसंयोजनरूपइ
ति पश्चादवगम्यते पूर्वेण प्रदेशेन वियुज्योत्तरेण संयुज्य ग्रामं गच्छतीति प्रयोगात् उद्यम्य निपात्य कुठारेण छिनत्तीतिवत् एवं देवद
त्तः प्रयतते इत्यत्रापि देवदत्तस्तथा व्याप्रियते यथा प्रयत्नो भवतीति प्रयत्नानुकूलो व्यापार एवाख्यातार्थो न तु प्रयत्नः तस्य धातुनोक्तत्वा
त् व्यापारविशेषाकांक्षायां च इच्छादिः पश्चादवगम्यते उद्यमन निपतनवत् तथा च सर्वत्रानुगतत्वादन्योत्पादानुकूलं व्यापारसामान्यमेवा
ख्यातार्थः न तु प्रयत्नमात्रं रथो गच्छतीति देवदत्तः प्रयतते इत्यादिषु तदभावात् न चात्रौपचारिकत्वं वक्तुं युक्तं मुख्यसंभवति तस्य न्याय्यत्वा
त् करोत्यर्थोप्यन्योत्पादानुकूलो व्यापार एव न प्रयत्नमात्रं करोतेश्चेतनाचेतनैककर्तृकाख्यातसामानाधिकरण्यादिति तत्सिद्धमन्योत्पादानु
कूलो व्यापारो आर्थीभावना इति सैव च यजेतेत्याख्यातांशेनोच्यते भावयेदिति तस्याश्च भाव्याकांक्षायां स्वर्गादिभाव्यत्वेन संवध्यते करणाकां
क्षायां यागादिः करणत्वेन संवध्यते प्रयाजादयो इतिकर्तव्यतात्वेन एवं च यजेतेत्यादिना स्वर्गाद्युद्देशेन यागादेर्विधानात्सिद्धं यागादेर्धर्मत्वं प्र
योजनमुद्दिश्य वेदेन विहितत्वादिति सोयं धर्मो यदुद्देशेन विहितस्तदुद्देशेन क्रियमाणस्तद्धेतुः श्रीगोविंदार्पणबुद्ध्या क्रियमाणस्तु निःश्रेयस
हेतुः न च तदर्पणबुद्ध्यानुष्ठाने प्रमाणाभावः यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् यत्तपस्यसि कौंतेय तत्कुरुष्व मदर्पणमिति स्मृतेः अ
स्याश्चाष्टकादिस्मृतिवत्प्रामाण्यादित्यत्र विस्तरः क्वाहं मंदमतिः क्वेयं प्रक्रिया भाट्टसंमता तस्माद्भक्तेर्विलासोयं गोविंदगुरुपादयोः ग्रंथरूपो म
दीयोयं वाग्व्यापारः सुशोभनः अनेन प्रीयतां देवो गोविंदो भक्तवत्सलः इति श्री अनंतदेवसूनुना आपदेवेन कृतं मीमांसान्यायप्रकाशसंज्ञकं
मीमांसाप्रकरणं समाप्तिमगमत् ॥ ॥




इदं पुस्तकं काश्यां गोवर्धनदासाभिधेयेन मया हरिहररत्नाकराख्यस्वीययं-
न्त्रालयेऽङ्कितम् यह सब पुस्तक काशी मे कुंजगली के दुकान पर है सम्वत १९५०